# DASAKUMÁRA CHARITA.

UTTARKHUNDAM.

BY

ÁCHÁRYA SRÍDAṆḌÍ.

---

EDITED BY

PANDITA DAMARU VALLABHA PANTA.

AT THE REQUEST OF BÁBU

BHUVANA CHANDRA VASÁKA

---

CALCUTTA:

PRINTED & PUBLISHED BY

BÁBU BHUVANA CHANDRA VASÁKA.

At the Sambáda Jnánaratnákara Press.

No. 8. Nimtollah Ghaut Street.

1870.

# दशकुमारचरितम् ।

## उत्तरखण्डम् ।

महामहोपाध्याय श्रीमद्दण्डि पण्डित विरचितम्

श्रीयुक्त डमरुवल्लभशर्म्मणा

संस्कृतम्

श्रीयुक्तनसाकोपनामकभुवनचन्द्रमहोदयानामनुमत्या
संवादज्ञानरत्नाकरयन्त्रे तद्द्वारैव मुद्रितम्

कलिकातायाम्

संवत् १९२५

१

# दशकुमारचरितम् ।

## उत्तरखण्डे

## राजवाहनचरितन्नाम

### प्रथम उच्छ्वासः ।



श्रुत्वा तु भुवनवृत्तान्तमुत्तमाङ्गना विस्मयविकसिताक्षी सस्मितमिदमभाषत दयित त्वत्प्रसादादद्य मे चरितार्था श्रोत्रवृत्तिः अद्य मे मनसि तमोपहस्त्वया दत्तो ज्ञानप्रदीपः पक्कमिदानीं त्वत्पादपद्मपरिचर्य्याफलम् अस्य च त्वत्प्रसादस्य किमुपकृत्य प्रत्युपकृतवती भवेयम् अभवदीयं हि नैव किञ्चिन्मत्सम्बद्धम् अथवा अस्त्येवा स्यापि जनस्य क्वचित् प्रभुत्वम् अशक्यं हि मदिच्छया विना सरस्वती मुखग्रहणोच्छेषणीकृतो दशनच्छदएष चुम्बयितुम् अम्बुजासनास्तन तटोपभुक्तमुरस्थलञ्चैतदालिङ्गयितुम् । इति प्रियोरसि प्रावृडिव नभस्युपास्तीर्णगुरुपयोधरमण्डला प्रौढ़कन्दलोमुकुलमिव रूढ़रागरूषितं चक्षुरुल्लासयन्ती बर्हिबर्हावलीविड़म्बिना कुसुमचन्द्रकशारेण मधुकरकुलव्याकुलेन केशकलापेन स्फुरदरुणकिरणकेसरकरालं कदम्बमुकुलमि

कान्तस्याधरमणिमधीरमाचुचुम्ब । तदारम्भस्फुरितया च रागवृत्त्या भूयोऽप्यावर्त्ततातिमात्रचित्रोपचारशीफरो* रतिप्रबन्धः ।

सुरतखेदसुप्तयोस्तु तयोः स्वप्ने विसगुणनिगडितपादोजरठः कश्चिज्जालपादः प्रत्यदृश्यत प्रत्यबुद्ध्येतान्चोभौ । अथ तस्य राजकुमारस्य कमलमृदुशशिकिरणरज्जुदामनिगृहीतमिव रजतशृङ्खलोपगूढं चरणयुगलमासीत् । उपलभ्यैव च किमेतदित्यतिपरित्रासविह्वला मुक्तकण्ठमाचक्रन्द राजकन्या । येन तत्सकलमेव कन्यान्तःपुरमग्निपरीतमिव पिशाचोपहृतमिव वेपमानम् अनिरूप्यमाणतदात्वायतिविभागम् अगण्यमानरहस्यरक्षासमयम् अवनितलविप्रविध्यमानगात्रम् आक्रन्दविदीर्य्यमाणकण्ठम् अश्रुस्रोतोऽवगुण्ठितकपोलतलम् आकुलीबभूव । तुमुले चास्मिन् समये अनियन्त्रितप्रवेशा किं किमिति सहसोपसृत्य विविशुरन्तर्वंशिकपुरुषाः ददृशुश्च तदवस्थं राजकुमारम् । तदनुभावनिरुद्धनिग्रहेच्छास्तु सद्यएव ते तमर्थं चण्डवर्म्मणे निवेदयामासुः । सोऽपि कोपादागत्य निर्द्दहन्निव दहनगर्भया दृशा निशाम्योत्पन्नप्रत्यभिज्ञः कथं सएवैष मदनुजमरणनिमित्त भूतायाः पापायाः

---

* शीफरः स्फीतरम्ययोः ।

बालचन्द्रिकायाः पत्युरत्यभिनिविष्टवित्तदर्पस्य वदेशिकवणिक्पुत्त्रस्य पुष्पोद्भवस्य मितं रूपमत्तः कलाभिमानीनैकविधविप्रलम्भोपायपाटवावर्ज्जितमूढ़पौरजनमिथ्याध्यारोपितवितथदैवतानुभावः कपटधर्म्मकञ्चुको निगूढ़पापशीलश्चपलो ब्राह्मणब्रुवः। कथमिवैनमनुरक्ता माहशीष्वपि पुरुषसिंहेषु मावमाना पापेयमवन्तिसुन्दरी। पश्यतु पतिमद्यैव स्थूलावतंसितमियमनार्य्यशीला कुलपांसनीति निर्भर्त्सयन् भीषणभ्रुकुटिदूषितललाटः कालइव काललोहदण्डकर्कशेन बाहुदण्डेनावलम्बय हस्ताम्बुजे रेखाम्बुजरथाङ्गलाञ्छने राजपुत्रं सरभसमाचकर्ष। स तु स्वभावधीरः सर्व्वपौरुषातिभूमिः सह्विष्णुतैकप्रतिक्रियां देवीमेव तामापदमवधार्य्य "स्मर तस्या हंसगामिनि हंसकथायाः सहस्व*वासु मासद्वयम्" इति प्राणपरित्यागरागिणीं प्राणसमां समाश्वास्य रिपुवश्यतामयासीत्। अथ विदितवार्त्तावार्त्तौ महादेवीमालवेन्द्रौ जामातरम् आकारपद्मपातिनौ च। तत्यागोपन्यासेन अरिणा जिघांस्यमानं ररक्षतुः नतु शक्तुस्तमप्रभुत्वादुत्तारयितुमापदः।

स किल चण्डशीलश्चण्डवर्म्मा सर्व्वमिदमुदन्त-

---

* वासु वाले।

जातं राजराज गिरौ तपस्यते दर्पसाराय सन्दिश्य सर्व्वमेव पुष्पोद्भवकुटुम्बकं सर्वस्व हरणपूर्व्वकं सद्यएव बन्धने क्षिप्त्वा कृत्वा च देवं राजवाहनं राज केसरिकिशोरकमिव दारुपञ्जरनिबद्धं मूर्द्धजजाल-लीनचूड़ामणि प्रभावविच्छिन्नक्षुत्पिपासादिखेदश्च तम् अवधूतदुहितृप्रार्थनस्याङ्गराजस्य उद्धरणायाज्ञान-भियास्यन्ननन्यविश्वासान्निनाय रुरोध च बलभर-दत्तकम्पश्चम्पाम् । चम्पेश्वरोऽपि सिंहवर्म्मा सिंह-इवासह्य विक्रमः प्राकारं भेदयित्वा महता बलसमु-दायेन निर्गत्य स्वप्रहित दूतव्राताहूतानां साहा-य्यदानायातित्वरमापततां धरापतीनामचिरका-लभाविन्यपि सन्निधावदत्तापेक्षः साक्षादिवावलेपो वपुष्मान् अक्षमापरीतः प्रतिबलं प्रतिजग्राह । जग्रहे च महति सम्पराये प्रक्षीणसकलसैन्यमण्डलः प्रचण्डप्रहरणघातभिन्नमर्म्मा सिंहवर्म्मा करिणः करिणमवप्लुत्य अतिमानुषप्राणबलेन चण्डवर्म्मणा । स च तद्दुहितर्य्यम्बालिकायामबलारत्नसमाख्याता-यामतिमात्राभिलाषः प्राणैरेनं न व्ययूयुजत् अपि त्वनीनयदुपनीताशंसमल्यमकल्यसन्धोबन्धनगृहम् अ-जीगणच्च गणकसङ्घैरद्यैव क्षपावसाने विवाहनीया राजदुहितेति ।

कृतकौतुकमङ्गले च तस्मिन् एकपिङ्गाचलात्प्र-तिनिवृत्य पूर्णभद्रोनाम जाङ्गलिकः प्रभवतोदर्प-

सारस्य प्रतिसन्देशमावेदयत् "अयि मूढ़ किमस्ति कन्यापुरदूषकेऽपि कश्चित्कृपावसरः। स्थविरः स राजा जरावलुप्तमानावमानचित्तो दुश्चरितदुहितृपक्षपाती यदेव किञ्चित्प्रलपति त्वयापि किं तदनुमत्या स्थातव्यम् अविलम्बितमेव तस्य कामोन्मत्तस्य चित्रबधवार्त्ताप्रेषणेन श्रवणोत्सवोऽस्माकं विधेयः सा च दुष्टकन्या सहानुजेन कीर्त्तिसारेण निगड़ितचारणा चारके निरोद्धव्येति" तच्चाकर्ण्य प्रातरेव राजभवनद्वारे स दुरात्मा कुमारीपुरदूषकः सन्निधापयितव्यः चण्डपोतश्च मातङ्गपतिरुपरचित कल्पनोपपन्नस्तत्रैव समुपस्थापनीयः। कृतविवाहकृत्यश्चोत्थायाहमेव तमनार्य्यं तस्य हस्तिनः कृत्वा क्रीड़नकं तदधिरूढ़एव गत्वा श्वशुराह्वानाय प्रत्यासीदतो राजन्यकस्य सकोशवाहनस्यावग्रहं करिष्यामि इति पार्श्वचरानवेक्षाञ्चक्रे। निन्ये चासावहन्यन्यस्मिन् उन्मिषत्येवोपोरागे राजपुत्रो राजाङ्गनं रक्षिभिः उपतस्थे च चरित गण्डश्चण्डपोतः।

क्षणे च तस्मिन् मुमुचे तदङ्घ्रियुगलं रजतशृङ्खलया। सा चैनं चन्द्रलेखाच्छविः काचिदप्सरोभूत्वा प्रदक्षिणीकृत्य प्राञ्जलिर्व्यजिज्ञपत् देव दीयतामनुग्रहार्द्रं चित्तम्। अहमस्मि सोमरश्मिसम्भवा सुरतमञ्जरी नाम सुरसुन्दरी। तस्या मे नभसि नलिनलुब्धमुग्धकलहंसानुबद्धवक्त्रायास्तन्निवारणचो-

भविच्छिन्नविगलिता हारयष्टिर्यदृच्छया जातु हैमवते सरसि मन्दोदके मग्नोन्मग्नस्य महर्षेर्मार्कण्डेयस्य मस्तके मणिकिरणद्विगुणितपलितमपतत्। पातितश्च कोपितेन कोऽपि तेन मयि शापः "पापे भजस्व लोहजातिमजातचैतन्या सतीति"। स पुनः प्रसाद्यमानस्त्वत्पादपद्मद्वयस्य मासद्वयमात्रं सन्दानतामेत्य निस्तरणीयामिमामापदम् अपरिक्षीणशक्तित्वं चेन्द्रियाणामकल्पयत्। अनल्पेन च पाप्मना रूप्यशृङ्खलीकृतां मामैक्ष्वाकस्य राज्ञो वेगवतः पौत्रः पुत्रो मानसवेगस्य वीरशेखरो नाम विद्याधरः शङ्करगिरौ समध्यगमत् आत्मसात्कृता च तेनाहमासम्। अथासौ पितृप्रयुक्ते वैरे वर्त्तमाने विद्याधरचक्रवर्त्तिनि वत्सराजवंशवर्द्धने नरवाहनदत्ते विरसाशयस्तदपकारक्षमोऽयमिति तपस्यता दर्पसारेण सह समसृज्यत प्रतिश्रुतञ्च तेनास्मै स्वसुरवन्तिसुन्दर्या दानम्। अन्यदा तु वियति व्यवदायमानचन्द्रिके मनोरथप्रियामवन्तिसुन्दरीं दिदृक्षुरवशेन्द्रियस्तद्विन्द्रमन्दिरद्युति कुमारीपुरमुपासरत्। अन्तरितश्च तिरस्कारिण्या विद्यया स च तां तदा त्वदङ्गोपाश्रयां सुरतखेदसुप्तगात्रीं त्रिभुवनसर्गयात्रासंहारसंश्रिताभिः कथाभिरस्तत-स्पन्दिनीभिः प्रत्यानीयमानरागपूरां न्यरूपयत्।

स तु प्रकुपितोऽपि त्वदनुभावप्रतिबद्धनिग्रहः क्षान्तराध्यवसायः समाजिज्ञपदितरेतरमत्यन्तसुखं प्रसुप्तयोर्युवयोर्दैवदत्तोत्साहः पाण्डुलोहशृङ्खलात्मना मया पादपद्मयोर्युगलं तव निगडयित्वा सरोषरभसमपासरत्। अवसितश्च समाद्य शापः तच्च मासद्वयं तव पारतन्त्र्यम्। प्रसीदेदानीं किं तव करणीयमिति प्रणिपतन्तीं वार्त्तयानया मत्प्राणसमां समाश्वासयेति व्यादिश्य विससर्ज।

तस्मिन्नेव क्षणान्तरे हतोहतश्चण्डवर्म्मा सिंहवर्म्मदुहितुरम्बालिकायाः पाणिस्पर्शरागप्रसारिते बाहुदण्ड एव बलवदवलम्ब्य सरभसमाकृष्य केनापि दुष्करकर्म्मकारिणा तस्करेणैकेनैव नखरप्रहारेण राजमन्दिरोद्देशश्च प्रावघातमयमापादयन्नचकितगतिरसौ विहरतीति वाचः समभवन्। श्रुत्वा चैतत् तस्येव मत्तहस्तिनमुदग्राधोरणोराजपुत्रोऽधिरुह्य रंहसोत्तमेन राजभवनमभ्यवर्त्तत। स त्वेरमरयावधूतपङ्क्तिदत्तवर्त्मा च प्रविश्य वेश्माभ्यन्तरम् अदभ्राम्बुनिर्घोषगम्भीरेण स्वरेणाभ्यधात् "कः स महापुरुषः येनैतन्मानुषमात्रदुष्करं महत् कर्म्मानुष्ठितम् आगच्छतु मया सहेमं मत्तहस्तिनमारोहतु अभयं मदुपकारार्थवर्त्तिनोदेवदानवैरपि विग्रहत्रासेनेति"।

निशम्यैवं स पुमानुपोढ़हर्षो निर्गत्य कृताञ्जलिराक्रम्य संज्ञा कुञ्चितं कुञ्जरगात्रमसक्तमध्यरुक्षत् । आरोहन्तमेवैनं निर्वर्ण्य हर्षोत्फुल्लदृष्टिः अये प्रियसखोऽयमपहारवर्म्मैवेति पश्चान्निषीदतोऽस्य बाहुदण्डयुगलमुभयभुजमूलप्रवेशितम् अग्रेऽवलम्बस्य स्वमङ्गमालिङ्गयामास स्वयञ्च पृष्ठतोवलिताभ्यां भुजाभ्यां पर्य्यवेष्टयत् । तत्क्षणोपसंहृतालिङ्गनव्यतिकरश्चापहारवर्म्मा चाप चक्र कणप कर्पण प्रास पट्टिश मुषल तमरादिप्रहरणजातमुपयुञ्जानो बलाबलिप्तान् प्रतिबलवीरान् बहुप्रकारयोधिनः परिक्षिपतः क्षितौ विचिक्षेप । क्षणेन चाद्राक्षीत्तदपि सैन्यमन्येन समन्ततोऽभिमुखमभिधावता बलनिकायेन परिक्षिप्तम् ।

अनन्तरञ्च कश्चित्कर्णिकारगौरः कुरुविन्दसवर्णकुन्तलः कमल कोमलपाणिपादः कर्णचुम्बिदुग्धधवलस्निग्धनीललोचनः कटितटनिविष्टरत्नखरः पट्टनिवसनः कृशाकृशोदरोरस्थलः कृतहस्ततया रिपुकुलमिषुवर्षेणाभिवर्षन् पादाङ्गुष्ठनिष्ठुरावघृष्टकर्णमूलेन प्रजविना गजेन सन्निकृष्य पूर्व्वोपदेशप्रत्ययादयमेव स देवो राजवाहन इति प्राञ्जलिः प्रणम्यापहारवर्म्मणि निविष्टदृष्टिराचष्ट "त्वदादिष्टेन मार्गेण सन्निपातितमेतदङ्गराजसाहाय्यदानायोप-

स्थितं राजन्यकम् अरिबलञ्च विहतविध्वस्तं क्षीवा-लहार्य्यग्रस्तं वर्त्तते किमन्यत्कृत्यमिति" हृष्टस्तु व्याजहारापहारवर्म्मा देव दृष्टिदानेनानुगृह्यतामयमाद्याकरः। सोऽयमप्यहमेवामुना रूपेण धनमित्राख्यया चान्तरितो मन्तव्यः। सएवायं निर्गमय्य बन्धनादङ्गराजम् अपवर्ज्जितञ्च कोशवाहनमेकीकृत्य अस्मद्भृत्येणामुना सह राजन्यकेन एकान्ते सुखोपविष्टमिह देवमुपतिष्ठतु यदि न दोषइति। देवोऽपि यथा ते रोचत इति तमाभाष्य गत्वा च तन्निर्द्दिष्टेनमार्गेण नगराद्बहिरतिमहतोरोहिणद्रुमस्य कस्यचित् क्षौमावदातसैकते गङ्गातरङ्गपवनपातशीतले तले द्विरदादवततार। प्रथमसमवतीर्णेनापहारवर्म्मणा च स्वहस्तसत्वर समीक्षते [मातङ्गइव] भागीरथीपुलिनमण्डले सुखं विषसाद।

तया निषसञ्च तमुपहारवर्म्मार्थपाल प्रमति मित्रगुप्त मन्त्रगुप्त विश्रुतैर्मैथिलेन च प्रहारवर्म्मणा काशीभर्त्रा च कामपालेन चम्पेश्वरेण सिंहवर्म्मणा सहोपागत्य धनमित्रः प्रणिपपात। देवोपि हर्षाविद्धमभ्युत्थितः कथं समस्तएष मित्रगणः समागतः को नामायमभ्युदयइति कृतयथोचितोपचारानुत्पी-

[स्फटिकासनइवेतिक्वचित्पाठः]

ड़िततरं परिरेभे काशीपतिर्मैथिलाङ्गराजांश्च सुहृन्निवेदितान् पितृवदपश्यत् । तैश्च [हर्षकम्पित पलितं] सरभसोपगूढः परमभिननन्द । ततः प्रवृत्तासु प्रीतिसङ्कथासु प्रियवयस्यगणानुयुक्तः स्वस्य च सोमदत्तपुष्पोद्भवयोश्चरितमनुवर्ण्य सुहृदामपि वृत्तान्तं क्रमेण श्रोतुं कृतप्रस्तावः तांश्च तदुक्तान्वयुङ्क्त ।

इति दशकुमारचरिते प्रथम उच्छ्वासः ।

---

## अपहारवर्म्मचरितन्नाम

### द्वितीय उच्छ्वासः ।

---

तेषु प्रथमं प्राह स्म किलापहारवर्म्मा । देव त्वयि तदावतीर्णे द्विजोपकारायासुरविवरं त्वदन्वेषणप्रवृत्ते च मित्रगणे अहमपि महीमटन् अङ्गेषु

---

[हर्षनिर्भरतरमितिकचित्पाठः]

गङ्गातटे वहिश्चम्पायाः कश्चिदस्ति तपःप्रभावोत्पन्नदिव्यचक्षुर्मरीचिर्नाम महर्षिरिति कुतश्चित्संलपतोजनसमाजादुपलभ्य अमुतोबुभुत्सुस्त्वद्गतिं तमुद्देशमगमम् न्यशामयञ्च तस्मिन्नाश्रमे कस्यचिच्चूतपोतकस्य छायायां कमप्युद्विग्नवर्णं तापसम् । अमुना चातिथिवदुपचरितः क्षणं विश्रान्तः क्वासौ भगवान् मरीचिस्तस्मादहमुपलिप्सुः प्रसङ्गप्रोषितस्य सुहृदोगतिम् आश्चर्य्यं ज्ञानविभवोहि स महर्षिर्मह्यां विश्रुत इत्यवादिषम् ।

अथासा[वुष्ण]मायतञ्च निश्वस्याशंसत् । आसीत्तादृशोमुनिरस्मिन्नाश्रमे । तमेकदा काममञ्जरी नामाङ्गपुर्य्यवतंसस्थानीया वारयुवतिरश्रुविन्दुतारकितपयोधरा सनिर्वेदमभ्येत्य कीर्णशिखण्डास्तीर्णभूमिरभ्यवन्दिष्ट । तस्मिन्नेव च क्षणे मातृप्रमुखस्तदाप्तवर्गः सानुक्रोशमनुप्रधावितस्तत्रैवाविच्छिन्नपातमपतत् । स किल कृपालुस्तं जनमार्द्रया गिराश्वास्य आर्त्तिकारणं तां गणिकामपृच्छत् । सा तु सव्रीडेव सविषादेव सगौरवेव चाब्रवीत् । भगवन्नैहिकस्य सुखस्या भाजनं जनोऽयम् आमुष्मिकाय श्रेयसीयाय आर्त्तानुपपत्तिवित्तयोर्भगवत्पादयो-

[बूर्द्धमिति कचित्पाठः ।]

मूलं शरणमभिप्रपन्न इति। तस्यास्तु जननी उद-
ञ्जलि पतितशारशिखण्डवन्धस्पृष्टमुक्तभूमिरभाषत।
भगवन्नस्या मे दोष सेषा वो दासी विज्ञापयति दो-
षस्य मम स्वाधिकारानुष्ठापनम्।

एष हि गणिकामातुरधिकारः दुहितुर्जन्मनः
प्रभृत्येवाङ्गक्रिया, तेजोबलवर्णमेधासंवर्द्धनेन दोषा-
ग्निधातुसाम्यकृता मितेनाहारेण शरीरपोषणम्,
आपञ्चमाद्वर्षात्पितुरप्यनतिदर्शनम्, जन्मदिने पुण्य-
दिनेषु च उत्सवोत्तरो मङ्गलविधिः, अध्यापनमनङ्ग-
विद्यानां साङ्गानाम्, नृत्यगीतवाद्यनाट्यचित्रास्वाद्य-
गन्धपुष्पकलासु लिपिज्ञानवचनकौशलादिषु च स-
म्यग्विनयनम्, शब्दहेतुसमयविद्यासु वार्त्तामात्राव
बोधनम्, आजीवज्ञाने क्रीडाकौशले सजीवनिर्जीवासु
च द्यूतकलासु अभ्यन्तरीकरणम्, अभ्यन्तरकलासु
वैश्वासिकजनात्प्रयत्नेन प्रयोगग्रहणम्, यात्रोत्सवा-
दिष्वादरप्रसाधितायाः स्फीतपरिवर्हायाः प्रकाश-
नम्, प्रसङ्गवत्यां सङ्गीतादिक्रियायां पूर्वसंगृहीतैर्गा-
न्धर्वाग्भिः सिद्धिलम्भनम्, दिङ्मुखेषु तत्तच्छिल्पवि-
त्तकैर्यशः प्रख्यापनम्, कार्त्तान्तिकादिभिः कल्याण-
लक्षणोद्घोषणम्, पीठमर्दविटविदूषकैर्भिक्षुक्यादिभिश्च
नागरिकपुरुषसमवायेषु रूपशीलशिल्पसौन्दर्यमाधु-

र्थप्रस्तावना, युवजनमनोरथलक्ष्यभूतायाः प्रभूततमेन शुल्केनावस्थापनम्, स्वतोरागान्धाय तद्भावदर्शनोन्मादिताय वा जातिरूपवयोऽर्थशक्ति शौचत्यागदाक्ष्यदाक्षिण्यशिल्पशीलमाधुर्य्योपपन्नाय स्वतन्त्राय प्रदानम्, अधिकगुणायास्वतन्त्राय प्राज्ञतमायाल्पेनापि बहुव्यपदेशेनार्पणम्, अस्वतन्त्रेण वा गान्धर्व्वसमागमेन तद्गुरुभ्यः शुल्कापहरणम्, अलाभेऽर्थस्य कामस्वीकृते स्वामिन्यधिकरणे वा साधनम्, रक्ततरस्य दुहित्रैकचारिणीव्रतानुष्ठापनम्, नित्यनैमित्तिकप्रीतिदायकतया हृतशिष्टानां गम्यधनानां चित्रैरुपायैरपहरणम्, अददता लुब्धप्रायेण च विगृह्यासनम्, प्रतिहस्तिप्रोत्साहनेन लुब्धस्य रागिणस्त्यागशक्तिसन्धुक्षणम्, असारस्य वाक्सन्तक्षणैर्लोकोपक्रोशनैर्दुहितृनिरोधनैर्व्रीडोत्पादनैरन्याभियोगैरवमानैश्चापवाहनम्, अर्थदैरनर्थप्रतिघातिभिश्चानिन्द्यैरन्यैरनुबद्धार्थानर्थसंशयान्विचार्य्य भूयः संयोजनमिति।

गणिकायाश्च गम्यं प्रति सज्जतैव न सङ्गः सत्यामपि प्रीतौ न मातुर्मातृकाया वा शासनातिवृत्तिः। एवं स्थिते अनया प्रजापतिविहितं स्वधर्ममुल्लङ्घ्य क्वचिदागन्तुके रूपमात्रधने विप्रयूनि स्वेनैव धनव्य-

येन रममाणया मासमात्रमत्यवाहि । गम्यजनस्य भू-यानर्थी योग्यः प्रत्याचक्षमाणयाऽनया प्रकोपितः स्व-कुटुम्बकञ्चावसादितम् । एषा कुमति र्न कल्याणीति निवारयन्त्यां मयि वनवासाय कोपात् प्रस्थिता । सा चेदियमहार्य्यनिश्चया सर्वएष जनोऽत्रैवानन्यगति रनशनेन संस्थास्यत इत्यरोदीत् ।

अथ सा वारयुवतिरनेन तापसेन भद्रे ननु दुः-खाकरोऽयं वनवासः तस्य फलमपवर्गः स्वर्गोवा प्रथमस्तु तयोः प्रकृष्टज्ञानसाध्यः प्रायोदुःसम्पादएव द्वितीयस्तु सर्व्वस्यैव सुलभः कुलधर्म्मानुष्ठायिनः तद-शक्यारम्भादुपरस्य मातुर्मते वर्त्तस्वेति सानुकम्पमभि-हिता यदीह भगवत्पादमूलं न शरणं शरणमस्तुमम कृपणाया हिरण्यरेता देवएवेत्युदमनायत । स तु मुनिरनुविमृश्य गणिकामातरमवदत् सम्प्रति गच्छ गृहान् प्रतीक्षस्व कानिचिद्दिनानि यावदियं सुकु-मारी सुखोपभोगसमुचिता सत्यरण्यवासव्यसनेनोद्वे-जिता भूयोभूयश्चास्माभिर्विबोध्यमाना प्रकृतावेव स्थास्यतीति । तथेति तस्याः प्रतियाते स्वजने सा गणिका तदृषिमलघुभक्तिर्धौताङ्गमनीयवासिनी नात्यादृतशरीरसंस्कारा वनतरुपोतकालबालपूरणै-र्देवतार्च्चनकुसुमोच्चयावचयप्रयासैर्नैकविकल्पोपहार-

कर्म्मभिः कामशासनार्थैं च गन्धमाल्यधूपदीपनृत्य-गीतवाद्यादिभिः क्रियाभिरेकान्ते च त्रिवर्गसम्बन्धिनीभिः कथाभिरध्यात्मवादैश्चानुरूपैरल्पीयसैव कालेनान्वरञ्जयत्।

एकदा च रहसि रक्तं तमुपलक्ष्य मूढ़ः खलु लोको यत्सह धर्मेणार्थकामावपि गणयतीति किञ्चिदस्मयत। कथय वास्तु केनांशेनार्थ कामातिशायी धर्म्मस्तवाभिप्रेतइति प्रेरिता मरीचिना लज्जामन्थर मारभताभिधातुम्। इतः किल जनाङ्गवतस्त्रिवर्गबलावलज्ञानम्। अथवैतदपि प्रकारान्तरं दासजनानुग्रहस्य। भवतु श्रूयताम्। ननु धर्म्माहृतेऽर्थकामयोरनुत्पत्तिरेव तदनपेक्षएव स धर्म्मो निर्वृत्ति-सुख प्रसूति हेतुरात्मनः समाधानमात्रसाध्यश्च सोऽर्थकामवद्वाह्यसाधनेषु नात्यायतते। तत्त्वदर्शनोपवृंहितश्च यथाकथञ्चिदप्यनुष्ठीयमानाभ्यां नार्थकामाभ्यां बाध्यते बाधितोऽपि चाल्पायासप्रतिसमाहितस्तमपि दोषं निर्हृत्य श्रेयसेऽप्यनल्पाय कल्पते। तथा हि पितामहस्य तिलोत्तमाभिलाषः भवानीपतेर्मुनिपत्नीसहस्रसन्दूषणं पद्मनाभस्य षोड़शसहस्रान्तःपुरविहारः प्रजापतेः स्वदुहितर्य्यपि प्रणयप्रवृत्तिः शचीपतेरहल्याजारता शशाङ्कस्य गुरु-

तल्पगमनम् अंशुमालिनोवड़वालङ्घनम् अनिलस्य केशरिकलत्रसमागमः वृहस्पतेरुतथ्यस्य भार्य्याभिसरणं पराशरस्य दासकन्यादूषणं पाराशर्य्यस्य भ्रातृदारसङ्गतिः अत्रेर्मृगीसमागमइति। अमराणाञ्च तेषु तेषु कार्य्येषु आसुरविप्रलम्भनानि ज्ञानबलान्न धर्म्मपीड़ामावहन्ति। धर्म्मपूते च मनसि नभसीव न जातु रजोऽनुषज्यते तन्मन्ये नार्थकामौ धर्म्मस्य शततमीमपि कलां स्पृशतइति।

श्रुत्वैतदृषिरुदीर्णरागवृत्तिरभ्यधात् अयि विलासिनि साधु पश्यसि न धर्म्मस्तत्त्वदर्शिनां विषयोपभोगेनोपरुध्यतइति। किन्तु जन्मनः प्रभृति अर्थकामवार्त्तानभिज्ञा वयं ज्ञेयौ चेमौ किंरूपौ किं परिवारौ किंफलौ चेति। सात्ववादीत् अर्थस्तावदर्ज्जनवर्द्धनरक्षणात्मकः कृषिपाशुपाल्यवाणिज्यसन्धिविग्रहादिपरिवारस्तीर्थप्रतिपादनफलश्च। कामस्तु विषयातिसक्तचेतसोः स्त्रीपुंसयोर्निरतिशय सुखस्पर्शविशेषः। परिवारस्त्वस्य यावदिह रम्यमुज्ज्वलञ्च। फलं पुनः परमाह्लादनं परस्परविमर्दजन्म स्मर्य्यमाणमधुरमुदीरिताभिमानमनुत्तमं सुखमपरोक्षं स्वसंवेद्यमेव। तस्यैव कृते विशिष्टस्थानवर्त्तिनः कष्टानि तपांसि महान्ति दानानि दारुणानि युद्धानि भीमानि समु-

द्रूलङ्घनादीनि मानवाः समाचरन्तीति। निशम्यै-तत् नियतिबलात्तु तत्पाटवात्तु स्वबुद्धिमान्द्यात्तु स्वनियममनादृत्य तस्यामसौ प्रासजत्।

सा सुदूरं मूढ़ात्मानञ्च तं प्रवहणेन नीत्वा पुरम् उदारशोभया राजवीथ्या स्वभवनमनैषीत्। अभूच्च घोषणा स्वः कामोत्सवइति। उत्तरेद्युः स्नातानु-लिप्तमारचितसुरुडमञ्जुमालम् आरब्धकामिजनवृत्त-निवृत्तस्वदृत्ताभिलाषं क्षणमात्रगतेऽपि तया विना दूयमानचित्तं तमृषिमृद्धिमता राजमार्गेणोत्सव-समाजं नीत्वा क्वचिदुपवनोद्देशे युवतिजनशतपरि-वृतस्य राज्ञः सन्निधौ स्मितमुखेन तेन भद्रे भग-वता सह निषीदेत्यादिष्टा सविभ्रमकृतप्रणामा सस्मितं न्यषीदत्।

तत्र काचिदुत्थाय बद्धाञ्जलिरुत्तमाङ्गना देव जितानयाहमस्यैदास्यमद्यप्रभृत्यभ्युपेतं मयेति प्रभु-प्राशंसीत्। विस्मयहर्षमूलश्च कोलाहलोलोकस्यो-दजिहीत। हृष्टेन च राज्ञा महार्हैरलङ्कारैर्म-हता च परिबर्हेणानुगृह्य विसृष्टा वारमुख्याभिः पौरमुख्यैश्च गणशः प्रशस्यमाना स्वभवनमगत्वैव तमृषिमभाषत: भगवन्नयमञ्जलिः चिरमनुगृहीतो-ऽयं दासजनः स्वार्थइदानीमनुष्ठेयइति। स तु

रागादपनिह्नुतवोद्भ्राम्याब्रवीत् प्रिये किमेतत् कुत इदमौदासीन्यं क्व गतस्तव मय्यसाधारणोऽनुराग इति। अथ सा सस्मितमवादीत् भगवन् यथाद्य राजकुले मत्तः पराजयोऽभ्युपेतस्तस्याश्च मम च कस्मिंश्चित् सङ्घर्षे मरीचिमावर्ज्जितवतीव श्लाघस इति तयास्म्यहमधिक्षिप्ता दास्यपणबन्धेन चास्मिन्नर्थे प्रावर्त्तिषि सिद्धार्था चास्मि त्वत्प्रसादादिति। स तया तथावधूतोदुर्म्मतिः कृतानुशयः शून्यवन्नवर्त्तिष्ट। यस्तयैवं कृतस्तपस्वी तमेव मां महाभाग मन्यस्व। स्वनिषिक्तं रागमुद्धृत्य तयैव बन्धक्या महद्वैराग्यमर्पितम्। अचिरादेव शक्य आत्मा त्वदर्थसाधनक्षमः कर्तुम्। अस्यामेव तावद्वसाङ्गपुर्य्यां चम्पायामिति।

अथ तन्मनस्युततमःस्पर्शभियेवास्तं रविरगात्। ऋषिमुक्तश्च रागः सन्ध्यात्वेनास्फुरत्। तत्क्षयादत्तवैराग्याणीव कमलवनानि समकुचन्। अनुमतमुनिशासनस्त्वहमसुनैव सहोपास्य सन्ध्याम् अनुरूपाभिः कथाभिस्तमनुशय्य नीतरात्रिः प्रत्युन्मिषत्युदयप्रस्थदावकल्पे कल्पद्रुमकिशलयावधीरिण्यरुणार्चिषि तं नमस्कृत्य नगरायोदचलम्। अदर्शञ्च मार्गाभ्यासवर्त्तिनः कस्यापि क्षपणकविहारस्य वहि-

र्व्विविक्ते रक्ताशोकषण्डे निषसम् असृष्टसमाधिम् आधिक्षीणम् अग्रगण्यमनभिरूपाणां कृपणवर्णं कमपि क्षपणकम्। उरसि चास्य शिथिलितमलनिचयान् मुखान्निपततोऽश्रुबिन्दुनलक्षयम् अप्राक्षञ्चा-न्ति कोपविष्टः क्व तपः क्व च रुदितं नचेद्रहस्यमिच्छामि श्रोतुं शोकहेतुमिति। सोऽब्रुत सौम्य श्रूयताम् अहमस्यामेव चम्पायां निधिपालितनाम्नः श्रेष्ठिनो ज्येष्ठसूनुर्वसुपालितो नाम। वैरूप्यात्तु मम विरूपकइति प्रसिद्धिरासीत्। अन्यस्यात सुन्दरकइति यथार्थनामा कल्याणगुणैः समृद्धो वसुना नातिपुष्टोऽभवत्। तस्य च मम च वपुर्वसुनी निमित्तीकृत्य वैरं वैरोपजीविभिः पौरधूर्त्तैरुदपाद्यत। तएव कदाचिदावयोरुत्सवसमाजे स्वयमुत्पादितमन्योन्यावमानमूलमधिक्षेप वचनव्यतिकरमुपशमय्य न वपुर्व्वसु वा पुंस्त्वमूलमपि तु प्रकृष्टगणिका प्रार्थ्ययौवनो हि यः स पुमान् अतोयुवतिललामभूता काममञ्जरी यं वा कामयते स हरतु सुभगपताकामिति व्यवास्थापयन्।

अभ्युपेत्यावां प्राहिणुव तस्य दूतान्। अस्यैमेव किलाऽमुष्याः स्मरोन्मादहेतुरासम्। आसीनयोश्चावयोर्मभिमेत्योपगम्य सा नीलोत्पलमयमिवापाङ्ग-

दामाङ्के मम मुञ्चन्ती तं जनमपत्रपयाऽधोमुखं व्यधत्त। सुभगेन च मया स्वधनस्य स्वगृहस्य स्वगणस्य स्वदेहस्य स्वजीवितस्य च सैवेश्वरी कृता। कृतश्चाहमनया मलमल्लकशेषः हृतसर्व्वस्वतया चापवाहितः प्रपद्य लोकोपहासलक्ष्यतामक्षमश्च सोढुं धिक्कृतानि पौरवृद्धानाम् इह जैनायतने मुनिनैकेनोपदिष्टमोक्षवर्त्मा सुकर एष वेशो वेशविनिर्गतानामित्युदीर्णवैराग्यस्तदपि कौपीनमजहाम्। अथ पुनः प्रकीर्णमलपङ्कः प्रबलकेशलुञ्चनव्यथः प्रकृष्टतमक्षुत्पिपासादिदुःखस्थानासनशयनभोजनेष्वपि द्विपइव नवग्रहो बलवतीभि र्यन्त्रणाभिरुद्वेजितः प्रत्यवामृशम्। अहमस्मि द्विजातिरस्वधर्म्मो ममैष पाषण्डपथावतारः श्रुतिस्मृतिविहितेनैव वर्त्मना मम पूर्व्वजाः प्रावर्त्तन्त। मम तु मन्दभाग्यस्य निन्द्यवेशम् अमन्ददुःखायतनं हरिहरहिरण्यगर्भादिदेवतापवादश्रवणनैरन्तर्य्यात्प्रेत्यापि निरयफलम् अफलं विप्रलम्भप्रायम् ईदृशमिदमधर्म्मवर्त्म धर्म्मवत्समाचरणीयमासीदिति प्रत्याकलितस्वदुर्नयः पिण्डीषण्डं विविक्तमेतदासाद्यापर्य्याप्तमस्रु मुञ्चामीति।

श्रुत्वा चैतदनुकम्पमानोऽब्रुवं भद्र क्षमस्व कञ्चित्कालम् अत्रैव निवस निजेन छुद्मनासावेव वेश्या

यथा त्वां योजयिष्यति तथा यतिष्ये सन्तुष्टप्रायास्ता-दृशा दृत्याश्वास्य तम् उत्थितोऽहं नगरमाविशन्नेव चोपलभ्य लोकवादाल्लुब्धसमृद्धपूर्णं पुरमिति अर्थानां नश्वरत्वञ्च प्रदर्श्य प्रकृतिस्थानमुन् विधास्यन् कर्णीसुतप्रहिते पथि मतिमकरवम्। अनुप्रविश्य च द्यूतसभामक्षधूर्तैः समगंसि। तेषां पञ्चविंशति प्रकारासु सर्वासु द्यूताश्रयासु कलासु कौशलम् अक्षभूमिहस्तादिषु चात्यन्तदुरुपलक्ष्याणि कूटकर्माणि तन्मूलानि सावलेपान्यधिक्षेपवचनानि जीवितनिरपेक्षाणि संरम्भविचेष्टितानि सभिकप्रत्ययव्यवहारान् न्यायबलप्रतापप्रायान् प्रयोजितार्थसाधनक्षमान् बलिषु सान्त्वनानि दुर्बलेषु भर्त्सनानि पक्षरचनानैपुणमुच्चावचान्युपप्रलोभनानि ग्लहप्रभेदवर्णनानि द्रव्यसंविभागौदार्य्यम् अन्तरान्तरा अश्लीलप्रायान् कलकलानित्येतानि चान्यानि चानुभवन् न तृप्तिमध्यगच्छम् अहसञ्च किञ्चित् प्रमाददत्तशारिके कस्मिंश्चित्कितवे। प्रतिकितवस्तु निर्दहन्निव क्रोधताम्रया दृशा मामभिवीक्ष्य "शिक्षयसि रे द्यूतवर्त्म हासव्याजेन आस्तामयमशिक्षितो वराकस्त्वयैव तावद्विचक्षणेन देविष्यामीति" द्यूताध्यक्षानुमत्या व्यत्यपजत्। मया जितश्चासौ षोड़शसहस्राणि दीनाराणाम्। तदर्द्धं

सभिकाय सभ्येभ्यश्च दत्त्वा अर्द्धं स्वीकृत्योदतिष्ठम्। उदतिष्ठंश्च तत्र गतानां हर्षगर्भाः प्रशंसालापाः। प्रार्थयमानसभिकानुरोधाच्च तदगारेऽत्युदारमभ्यवहारविधिमकरवम्। यन्मूलश्च मे दुरोदरावतारः स मे विमर्द्दको नाम विश्वास्यतरं द्वितीयं हृदयमासीत्।

तन्मुखेन च सारतः कर्म्मतः शीलतश्च सकलमेव नगरमवधार्य्य धूर्जटिकण्ठकल्माषकालतमे तमसि नीलनिवसनार्द्धोरुकपरिहितो बद्धतीक्ष्णकौक्षेयकः फणिमुख काकली सन्दंशक पुरुषशीर्षक योगचूर्ण योगवर्त्तिका मानसूत्र कर्कटक रज्जु दीपभाजन भ्रमर करण्डकप्रभृत्यनेकोपकरणयुक्तो गत्वा कस्यचिल्लुब्धेश्वरस्य गृहे सन्धिं छित्वा पटच्छायसूक्ष्मच्छिद्रालक्षितान्तर्गृहप्रवृत्तिरव्ययो निजगृहमिवानुप्रविश्य नीवीं सारमहतीमादाय निरगाम्। नीलनीरदनिकरपीवरतिमिरनिविड़पीड़ितायां राजवीथ्यां झटिति शतह्रदासम्पातमिव क्षणमालोकमलक्षयम्। अथासौ नगरदेवतेव नगरमोषरोषिता निःसम्बाधवेलायां निःसृता सन्निकृष्टा काचिदुन्मिषद्भूषणा युवतिराविरासीत्। क्वासि वासु क्व यासीति सदयमुक्ता त्रासगद्गदमवादीत्। आर्य्य पुर्य्यस्यामर्य्यवर्य्यः कुबेर-

दत्तनामा वसति अस्यारहं तस्य कन्या। मां जात मात्रां धनमित्रनाम्ने अत्रत्यायैव कस्मैचिद्दिभ्यकुमारायान्वजानाद्भार्य्यां मे पिता। स पुनरमुष्मिन्नत्युदारतया पित्रोरन्ते वित्तैर्निजैः क्रीत्वेवार्थिवर्गाद्दारिद्र्यं दरिद्रति सति अथ उदारकइति च प्रीत लोकाधिरोपितापरश्लाघ्यनामनि वरयत्येव तस्मिन् मां तरुणीभूताम् अधनइत्यदत्त्वा अर्थपतिनाम्ने कस्मैचिदितरस्मै यथार्थनाम्ने सार्थवाहाय दित्सति मे पिता। तदमङ्गलमद्य किल प्रभाते भावीति ज्ञात्वा प्रागेव प्रियतमदत्तसङ्केता वञ्चितस्वजना निर्गत्य बाल्याभ्यस्तेन वर्त्मना मन्मथैकाभिसारा तदगारमभिसरामि। तन्मां मुञ्च गृहाणैतद्भाण्डमित्युन्मुच्य मह्यमर्पितवती। दयमानश्चाहमब्रुवम् "एहि साध्वि त्वां नयेयं त्वत्प्रियतमम्" इति त्रिचतुराणि पदान्यचलम्। आपतच्च दीपिकालोकपरिलुप्यमानतिमिरभारं यष्टिकृपाणपाणि नागरिक बलमनल्पम्। प्रवेपमानां कन्यकामवदं भद्रे माभैषीः अस्त्ययम् असि द्वितीयो मे बाहुः। अपि तु मृदुरयमुपायस्त्वदपेक्षया चिन्तितः शृणु भावितविषवेगविक्रियः त्वयाप्यमी वाच्याः निशि वयमिमां पुरीं प्रविष्टाः दष्टश्च ममैष नायको दर्वीकरेणामुष्मिन् सभाकोणे यदि वः कश्चिन्म-

न्वित्कृपालुः स एनमुज्जीवयन्मम प्राणानाहरेद-नाथाया इति। सापि बाला गत्यन्तराभावात् भयगद्गदस्वरा बाष्पदुर्द्दिनाक्षी बद्धवेपथुः कथंकथमपि गत्वा मदुक्तमन्वतिष्ठत् अशयिषि चाहं भावितविषविक्रियः। तेषु कश्चिन्नरेन्द्राभिमानी मां निर्व्वर्ण्य मुद्रातन्त्रमन्त्रध्यानादिभिश्च उपक्रम्याकृतार्थः "गतएवायं कालदष्टः तथाहि श्यावश्यावमङ्गं रुद्धा दृष्टिः शान्तएवोष्मा शुचा अलं वासु श्वोऽग्निसात् करिष्यामः कोऽतिवर्त्तेत दैवम्" इति सहेतरैः प्रायात्। उत्थितश्चाहम् उदारकाय तां नीत्वा अब्रुवम्। अहमस्मि कोपि तस्करः त्वद्गतेनैव चेतसा सहायभूतेन त्वामिमामभिसरन्तीमन्तरोपलभ्य कृपया त्वत्समीपमुपानैषम् भूषणमिदमस्या इत्यंशुपटलपाटितध्वान्तजालं तदर्पितवान्।

उदारकस्तु तदादाय सलज्जश्च सहर्षश्च ससम्भ्रमश्च मामभाषत। आर्य्य त्वयैवेयमस्यां निशि प्रिया मे दत्ता वाक् पुनर्ममापहृता तथाहि न जाने वक्तुम्। त्वत्कर्म्मैतदद्भुतमिति न ते स्वशीलमङ्गतवत्प्रतिभाति, नैवमन्येनापि कृतपूर्व्वमिति प्रतिनियतैव वस्तु शक्तिः नहि त्वय्यन्यदीया लोभादयः, त्वयाद्य साधुतोन्मीलितेति तत्प्रायस्तत्पूर्व्वाव

दानेभ्यो न रोचते, दृष्टमिदानीमौदार्य्यस्य स्वरूप मिति त्वदाशयमननुमान्य न युक्तोनिश्चयः, त्वयामुना सुकृतेन क्रीतोऽयं दासजनइति असारमतिगरीयसा क्रोणासीति स ते प्रज्ञाधिक्षेपः, प्रियादानस्य प्रतिदानमिदं शरीरमिति तदलाभे निधनोन्मुखमिदमपि त्वयैव दत्तम्, अथवैतावदत्र प्राप्तरूपम् अद्य प्रभृति भर्त्तव्योऽयं दासजनइति ममपादयोरपतत्।

उत्थाप्य चैनमुरसोपश्लिष्य अभाषिषि भद्र कास्ते प्रतिपत्तिरिति। सोऽभ्यधत्त न शक्नोमि चैनामत्र पित्रोरनभ्यनुज्ञयोपयम्य जीवितुम् अतोऽस्यामेव यामिन्यां देशमिमं जिहासामि कोवा अहं यथा त्वमाज्ञापयसीति। अथ मयोक्तम् अस्त्येतत् स्वदेशोदेशान्तरमिति नेयं गणना विदग्धस्य पुरुषस्य किन्तु बालेयमनल्पसौकुमार्य्याकष्टाः प्रत्यवायभूयिष्ठाश्च कान्तारपथाः शैथिल्यमिव किञ्चित् प्रज्ञासत्वयोरनर्थेनेदृशेन देशत्यागेन सम्भाव्यते। तत्त्वहानया सुखमिहैव वस्तव्यम् एहि नयावैनां स्वमेवावासमिति। अविचारानुमतेन तेन सद्यएवैनां तद्गृहमुपनीय तयोरपसर्पभूतया तत्र लब्धाखण्डावशेषमचोरयाव। ततो निष्पत्य क्वचिन्मुषितकं निधाय

समुच्चलन्तौ नागरिकपुरुषसम्पाते मार्गपार्श्वशा-
यिनं कञ्चिन्मत्तवारणमुपरि पुच्छमाक्रम्याध्यारो-
हाव। ग्रैवेयप्रोतपादयुगलेन च मयोत्थाप्यमानएव
प्रतिताघोरणपृथुलोरःस्थलपरिणतः पुरीतल्लतापा-
रीतदन्तकाण्डः स रथिक बलमच्चिणोत्। अध्वंस-
याव चामुनैवार्थपतिभवनम्। अपवाह्य च क्वचन
जीर्णोद्याने शाखाग्राहिकया चावातराव। स्वगृह
गतौ च स्नातौ शयनमध्यशिश्रयाव।

तावद्देवोदगादुदधेरुदरात् उदयाचलेन्द्रपद्मरा-
गशृङ्गकल्पं कल्पद्रुमहेमपल्लवापीड़पाटलं पतङ्ग-
मण्डलम्। उत्थाय च धौतवक्त्रौ प्रगेतन मङ्गला-
न्यनुष्ठाय अस्मत्कर्मतुमुलं पुरमनुविचरन्तावशृणुव
वरवधूगृहेषु कोलाहलम्। अथार्थैरर्थपतिः कुबे-
रदत्तमाश्वास्य कुलपालिकाविवाहं मासावधिकमक-
ल्पयत्। उपह्वरे पुनरित्यशिश्रयं धर्नामित्रम् उप-
तिष्ठ सखे एकान्तएव चर्मरत्नभस्त्रिकामिमां पुर-
स्कृत्य अङ्गराजम् आचक्ष्व च जानात्येव देवो नैकको-
टिसारस्य वसुमित्रस्य मां धनमित्रं नामैकपुत्रं सोऽहं
मूलहरत्वमेत्य अर्थिवर्गादसत्रवज्ञातो मदर्थमेव संव-
र्द्धितायां कुलपालिकायां महादारिद्र्यदोषात्पुनः कुबेर-
दत्तेन दुहितरर्थपतये दित्सितायाम् उद्वेगादुज्झितु-

मसून् उपपौरिकं जरद्वनमवगाह्य कण्ठन्यस्तपाशस्त्रिकः केनापि जटाधरेण निवार्यैवमुक्तः किं ते साहसस्य मूलमिति । मयोक्तम् अवज्ञा सोढव्यं दारिद्र्यमिति । स पुनरेवं कृपालुरन्वग्रहीत् तात मूढोऽसि नान्यत्पापिष्ठतममात्मत्यागात् आत्मानमात्मनानवसाद्य वोद्धरन्ति सन्तः । सन्त्युपाया धनार्ज्जनस्य बहवः नैकोऽपि च्छिन्न कण्ठप्रतिसन्धानपूर्व्वस्य [प्राणलाभस्य] किमनेन सोऽस्म्यहं मन्त्रसिद्धः साधितेयं लक्षग्राहिणी चर्म्मरत्नभस्त्रिका चिरमहमस्याः प्रसादात् कामरूपेषु कामप्रदःप्रजानामवात्सं मत्सरिणां जरसि भूमिस्वर्गमतोद्देशं प्रवेष्टुमागतः तामिमां प्रतिगृहाण मदन्यत्र चेयं वणिग्भ्यो वारमुख्याभ्यो वा दुग्धे इति हि तद्गता प्रतीतिः । किन्तु यत्सकाशादन्यायापहृतं तत्तस्मै प्रत्यर्पणीयं न्यायार्ज्जितन्तु देवब्राह्मणेभ्यस्त्याज्यम् अथेयं देवतेव शुचौ देशे निवेश्यार्च्यमाना प्रातः प्रातः सुवर्णपूर्णैव दृश्यते स एष कल्प इति बद्धाञ्जलये मह्यमेनां दत्त्वा किमपि गावच्छिद्रं प्राविशत् । इयञ्च रत्नभूता चर्म्मभस्त्रिका देवायानिवेद्य नोपजीव्या इत्यानीता परन्तु देवः

---

[ प्राणसञ्चारणस्येति क्वचित्पाठः । ]

प्रमाणमिति"। राजा च नियतमेवं वक्ष्यति भद्र प्रीतोऽस्मि गच्छ यथेष्टमेनामुपभुङ्क्ष्वेति। भूयश्च ब्रूहि यथा न कश्चिदेनां मुष्णाति तथानुगृह्यतामिति। तदप्यवश्यमसावभ्युपेष्यति। ततः स्वगृहमेत्य यथोक्तमर्थत्यागं कृत्वा दिने दिने वरिवस्यमाना स्तोयल्लब्धैरर्थैर्नक्तमापूर्य्य प्रातर्लोकाय दर्शयिष्यसि ततः कुवेरदत्तस्तृणायमत्वार्थपतिमर्थलुब्धः कन्यकया स्वयमेव त्वामुपस्थास्यति। अथ कुपितोऽर्थपतिर्व्यवहर्तुमर्थगर्व्वादभियोक्ष्यते तञ्च भूयोभिरितैरुपायैः कौपीनावशेषं करिष्यावः। स्वकञ्च चौर्य्यमनेनैवाभ्युपायेन सुप्रच्छन्नं भविष्यतीति।

हृष्टश्च धनमित्रो यथोक्तमन्वतिष्ठत्। तदहरेव मन्नियोगाद्विमर्दकोऽर्थपतिसेवाभियुक्त स्तस्योदारके वैरमभ्यवर्द्धयत्। अर्थलुब्धश्च कुवेरदत्तो निवृत्यार्थपते धंनमित्रायैव तनयां सानुनयं प्रादित्सत प्रत्यवस्थाञ्चार्थपतिः।

एष्वेव दिवसेषु काममञ्जर्याः स्वसा यवीयसी रागमञ्जरीनाम पञ्चवीरगोष्ठे सङ्गीतकमनुष्ठास्यतीति सान्द्रादरः समागमन्नागरजनः। सचाहं सह सख्या धनमित्रेण तत्र संन्यधिषि। प्रवृत्तनृत्यायाञ्च तस्यां द्वितीयरङ्गपीठं समाभून्मनः। तद्दृष्टिविभ्रमोत्पल-

वनसञ्चापाश्रयस्य पञ्चशरो भावरसानां सामग्र्यात् समुदितबलइव मामतिमात्रमव्यथयत्। अथासौ नगरदेवतेव नगरमोषरोषिता लीलाकटाक्षमाला-शृङ्खलाभि र्नीलोत्पलपलाशदामश्यामलाभि र्मामबध्नात्। उत्थोत्थिता च सा सिञ्जिलाभशोभिनी किं विलासात् किमभिलाषात् किमकस्मादेव वा न जाने असकृन्मां सखीभिरप्यनुपलक्षितेनापाङ्गप्रेक्षितेन सविभ्रमारेचितभ्रूलतमभिवीक्ष्य सापदेशञ्च किञ्चि-दाविष्कृतदशनचन्द्रिकं स्मित्वा लोकलोचनमानसानु-याता प्रातिष्ठत। सोऽहं स्वगृहमेत्य दुर्निवारयो-त्कण्ठया दूरीकृताहारस्पृहः शिरःशूलस्पर्शमपदि-शन् विविक्ते तल्पे मुक्तैरवयवैरशायिषि।

अतिनिष्णातश्च मदनतन्त्रे मामभ्युपेत्य धनमित्रो रहस्यकथयत्। सखे सैव धन्या गणिकादारिका या-सेवं भवन्मनोऽभिनिविशते। तस्याश्च मया सुलक्षिता भावप्रवृत्तिः तामप्यचिरादयुग्मशरः शरशयने शा-ययिष्यति स्थानाभिनिवेशिनोश्च वामयत्नसाध्यः समागमः। किन्तु सा किल वारकन्यका गणिका-स्वधर्मप्रतीपगामिना भद्रोदारेणाशयेन समगिरत गुणशुल्काहं न धनशुल्का नच पाणिग्रहणादृते अन्यभोग्यं यौवनमिति। तच्च मुक्तः प्रतिषिध्याक्र-

तार्यां तद्भगिनी काममञ्जरी माता च माधवसेना राजानमभ्युकरजावौ व्यजिज्ञपताम्। देव युष्मद्दासी रागमञ्जरी रूपानुरूपशीलशिल्पकौशला पूरयिष्यति मनोरथानित्यासीदस्माकमतिमहत्याशा साद्य मूलच्छिन्ना यदियमतिक्रम्य स्वकुलधर्मम् अर्थनिरपेक्षा गुणेभ्यएव स्वं यौवनं विचिक्रीषते कुलस्त्रीवृत्तमेवाभ्यतममनुतिष्ठासति साचेदियं देवपादाज्ञयापि तावत्प्रकृतिमापद्येत तदा पेशलं भवेदिति। राज्ञा च तदनुरोधात्तयानुशिष्टा सत्यप्यनात्मवैव सा यदासीत् तदास्याः स्वसामाता च रुदित,नवं न्येन राज्ञे समगिरतां यदि कश्चिद्भुजङ्गोऽस्मदिच्छया विनैनां बालां विप्रलभ्य नाशयिष्यति स तस्करव[द्वध्यइति] तदेवं स्थिते धनाढ्ते न तत्स्वजनोऽनुमन्यते नतु धनदायासावभ्युपगच्छतीति विचिन्त्योऽताभ्युपायइति।

अथ मयोक्तं किमत्र चिन्त्यं गुणैस्तामावर्ज्य गूढमर्थैस्तत्स्वजनं तोषयावइति। ततश्च काञ्चित्काममञ्जर्याः प्रधानदुतीं धर्म्मरक्षितां नाम शाक्यभिक्षुकीं चीवरपिण्डदानादिनोपसंगृह्य तन्मुखेन तया वन्धक्या पण्यबन्धमकरवम् "अजिनरत्नमुदारकाम्युि-

(द्वन्त्वयइतीति क्वचित्पाठः।)

त्वा मया तुभ्यं देयं यदि प्रतिदानं रागमञ्जरीति"। सोऽहं तथेति प्रतिपन्नायाञ्च तस्यां तथा तमर्थं सम्पाद्य मङ्गुणोन्मादितायाः रागमञ्जर्य्याः करकिसलयमग्रहीषम्। यस्याञ्च निशि चर्म्मरत्नस्तेयवादस्तस्याः प्रारम्भेकार्य्यान्तरापदेशेन समाहूतेषु श्वस्तत्रैव नागरमुख्येषु मत्प्रणिधि र्विमर्द्दकोऽर्थपतिग्टह्यो नाम भूत्वा धनमित्रमुल्लङ्घ्य बह्वतर्ज्जयत्। उक्तश्च धनमित्रेण भद्र कस्तवार्थः यत्परस्य हेतोर्म्मामाक्रोशसि न स्मरामि स्वल्पमपि तवापकारं मत्कृतमिति। स भूयोऽपितर्ज्जयन्निवाब्रवीत् स एष धनगर्व्वानाम यत्परस्य भार्य्यां शुल्कक्रीतां पुनस्तत्पितरौ द्रव्येण विलोभ्य स्वीचिकीर्षसि ब्रवीषि च कस्तवापकारो मत्कृतइति ननु प्रतीतमेवैतत् सार्थवाहस्यार्थपतेर्व्विमर्द्दको वहिश्चराः प्राणाइति सोऽहं तत्कृते प्राणानपि परित्यजामि ब्रह्महत्यामपि न परिहरामि ममैकरात्रजागरप्रतीकारस्तवैष चर्म्मरत्नाहङ्कारदाहज्वरइति। तथा ब्रुवाणश्च पौरमुख्यैः सामर्षं निषिध्यापवाहितो गतोऽभूत्।

इयञ्च वार्त्ताकृत्रिमार्त्तिना धनमित्रेण चर्म्मरत्ननाशमादावुपक्षिप्य पार्थिवाय निवेदिता। सचार्थपतिमाहूयोपह्वरे पृष्टवान् अङ्ग किमस्ति कश्चिद्विमर्द्दको

नामात्रभवतइति। तेन च मूढ़ात्मना अस्ति देव परं मित्रं कस्य तेनार्थइति कथिते राज्ञोक्तम् अपि शक्नोषि तमाह्वातुमिति। बाढ़मस्मि शक्तइति निर्गत्य स्वगृहे वेशवाटे द्युतसभायामापणे च निपुणमन्विष्यन्नोपलब्धवान्। कथं वोपलभेत स वराकः स खलु विमर्द्दको मन्नाहितत्वदभिज्ञानचिह्नो मन्नियोगात् त्वदन्वेषणायोज्जयिनीं तदहरेव प्रातिष्ठत। अर्थपतिस्तु भ्रमन् तमदृष्ट्वा तत् कृतमपराधमात्मसम्बन्धीति मत्वा मोहाद्भयाद्वा प्रत्याख्याय पुनर्धनमित्रेण विभावितेन कुपितेन राज्ञा निगृह्य निगड़बन्धनमनीयत।

तेष्वेव दिवसेषु विधिना कल्पोक्तेन चर्म्मरत्नदोग्धुकामा काममञ्जरी पूर्व्वदुग्ध चपणीभूतविरूपकं रहस्युपसृत्य ततोऽपहृतं सर्व्वमर्थजातं तस्मै प्रत्यर्प्य सप्रत्ययञ्च बह्वनुनीय प्रत्यागमत्। सोऽपि कथञ्चिन्निर्ग्रन्थिकग्रहमोचितात्मा मदनुशिष्टो हृष्टतमः स्वधर्म्ममेव प्रत्यपद्यत। काममञ्जर्य्यपि कतिपयैरेवाहोभिरश्मन्तकशेषम् अजिनरत्नदोहाशया स्वमभ्युदयमकरोत्। अथ मत्प्रयुक्तो धनमित्रः पार्थिवं मिथोव्यज्ञापयत् देव येयं गणिका काममञ्जरी लोभोत्कर्षात् लोभमञ्जरीति लोकोपक्रो-

श्रपातमासीत् साद्य मुशलोलूखलान्यपि निरपेक्षं त्यजति तन्मन्ये मच्चर्म्मरत्नलाभं हेतुं तस्य खलु कल्यस्तादृशः वणिग्भ्यो वारमुख्याभ्यश्च वा दुग्धं नान्येभ्यदृति हि तद्गता प्रतीतिः अतोऽनुध्यामस्ति मे शङ्केति।

सा सद्यएव राज्ञा सह जनन्या समाहूयत। व्यथितवर्णैनेव मयोपह्वरे कथितं नूनमार्य्ये सर्व्वस्वत्यागादतिप्रकाशादाशङ्कनीयचर्म्मरत्नलाभा तदनुयोगायाङ्गराजेन समाहूयसे भूयोभूयश्च निर्बन्धया त्वया नियतमस्मि तदागतित्वेनाहमपदेश्यः ततश्च मे भावी चित्रवधः मृते च मयि न जीविष्यत्येव ते भगिनी त्वञ्च निःस्वीभूता चर्म्मरत्नञ्च धनमित्रमेव प्रतिभजिष्यति तदियमापत् समन्ततोऽनर्थानुबन्धिनी तत् किमत्र प्रतिविधेयमिति। तया तज्जनन्या चाश्रूणि विसृज्योक्तम् अस्त्वेतदस्मद्बालिश्यान्निर्भिन्नप्रायं रहस्यम्। राज्ञश्च निर्बन्धाद्दितिचतुरमतिनिह्नुत्यापि नियतमागतिरपदेश्यैवचौरितस्य त्वयि त्वयि त्वपदिष्टे सर्व्वमस्मत्कुटुम्बमवसीदेत्। अर्थपतौ च तदयशो रूढम् अङ्गपुरप्रसिद्धञ्च तस्य कीनाशस्याशाभिः सङ्गतम् अमुनैव तदस्मभ्यं

दत्तमित्यपदिश्य वरमात्मा गोपयितुमिति मामभ्युपगमय्य राजकुलमगमताम्।

राज्ञानुयुक्ते च नैष न्यायो वैश्यकुलस्य यद्दातुरपदेशः। नन्वर्थै र्न्यायार्ज्जितैरेव पुरुषावेशमुपतिष्ठन्तीत्यसकृदतिप्रगृह्य कर्णनासाच्छेदोपच्छेपभीषिताभ्यां दग्धबन्धकीभ्यां सएव तपस्वी तस्करत्वेनार्थपतिरग्राह्यत। कुपितेन च राज्ञा तस्य प्राणेषूद्यतोदण्डः। प्राञ्जलिना धनमित्रेणैव प्रत्यषिध्यत "आर्य्य मौर्य्यदत्तएष वरो वणिजाम् ईदृशेष्वपराधेषु नास्त्यसुभिरभियोगः यदि कुपितोऽसि हृतसर्व्वस्वो निर्व्वासनीयः पापएषइति"। तन्मूला च धनमित्रस्य कीर्त्तिरप्रथत अप्रीयत च भर्त्ता। पटच्चरच्छेदशेषः अर्थपतिरर्थमत्तः सर्वपौरजनसमक्षं निरवास्यत। तद्द्रव्याणान्तु केनचिदवयवेन सा वराकी काममञ्जरी चर्म्मरत्नभस्त्रिकापविद्धसर्व्वस्वा सानुकम्पं धनमित्राभिचोदितेन भूपेनान्वगृह्यत। धनमित्रश्चाहनि गुणिनि कुलपालिकामुपायंस्त।

तदेवं सिद्धसङ्कल्पो रागमञ्जरीगृहं हेमरत्नपूर्णमकरवम्। अस्मिंश्च पुरे लुब्धसमृद्धवर्गस्तया मुषितः

यथा कपालपाणिः स्वैरेव धनैर्म्मद्विश्राणितैः समृद्धीकृतस्यार्थिवर्गस्य गृहेषु भिक्षार्थमभ्रमत्।

नह्यलमतिनिपुणोपि पुरुषो नियतिलिखितां लेखामतिक्रमितुं यतोऽहमेकदा रागमञ्जर्य्याः प्रणयकोपप्रशमनाय सानुनयं पायितायाः पुनःपुनः प्रणयसमर्पितमुखमधुगण्डूषम् आस्वादमास्वादं मदेनास्पृक्षे। शीलं हि मदोन्मादयोरमार्गेणाप्युचितकर्म्मस्वेव प्रवर्त्तनम्। यदहमुत्पोढ़मदो नगरमिदमनयैकयैव शर्व्वर्य्या निर्द्धनीकृत्य त्वद्भवनं पूरयेयमिति प्रव्यथितप्रियतमाप्रणामाञ्जलिशपथशतातिवर्त्ती मत्तवारणइव रभसच्छिन्नशृङ्खलः कयापि धात्र्या शृगालिकाख्ययानुगम्यमानो नातिपरिकरोऽसिद्वितीयो रंहसा परेणोदचलम्। अभिपततोपि नागरिकपुरुषानशङ्कमेवावगाह्य तस्करइति तैरभिहन्यमानोपि नातिकुपितः क्रीड़न्निव मदावसन्नहस्तपातितेन निस्त्रिंशेन द्वित्रानेव हत्वा अवघूर्णमानताम्रदृष्टिरपतम्। अनन्तरमार्त्तरवान्विसृजन्ती शृगालिका ममाभ्याशमगमत् अबध्ये चाहमरिभिः। आपदा तु मदापहारिण्या सद्यएव बोधितस्तत्क्षणोपजातया प्रतिभया व्यचीचरम्। अहो ममेयं मोहमूला महत्यापदापतिता प्रसृततरश्च सख्यं मया सह

धनमित्रस्य मत्परिग्रहत्वञ्च रागमञ्जर्य्याः मदेनसा च तौ प्रोर्णुतौ खो नियतं निग्राहयिष्येते। तदियमिह प्रतिपत्तिः ययानुष्ठीयमानया मन्नियोगतस्तौ परित्रास्येते माञ्च कदाचिदनर्थादितस्तारयिष्यतीति कमप्युपायमात्मनैव निर्णीय शृगालिकामगादिषम् अपेहि जरतिके या तामर्थलुब्धां दग्धगणिकां रागमञ्जरिकामजिनरत्नमत्तेन भ्रातुर्मे मित्रच्छद्मना धनमित्रेण सङ्गमितवती सा हतासि तस्य पापस्य चर्मरत्नमोषात् दुहितुश्च ते साराभरणापहारादहमद्य निःशल्यमुत्स्रक्ष्येयं जीवितमिति। सा पुनरुद्घटितज्ञा परमधूर्त्ता साश्रुगद्गदमुदञ्जलिस्तान् पुरुषान् सप्रणाममासादितवती मामपूर्व्वं मम पुरस्तादयाचत भद्रकाः प्रतीक्ष्यतां कञ्चित्कालं यावदस्मादस्मदीयं सर्वं मुषितमर्थजातमवगच्छेयमिति। तथेति तैः प्रतिपन्ने पुनर्मत्समीपमासाद्य सौम्य क्षमस्वास्य दासीजनस्यैकमपराधम् अस्तु स कामं त्वत्कलत्राभिमर्शी वैरास्पदं धनमित्रः सारंस्तु चिरकृतां ते परिचर्य्यामनुग्रहीतुमर्हसि दासीं रागमञ्जरीम् आकल्पसारोहि रूपाजीवाजनः तद्ब्रूहि क्व निहितमस्या भूषणमिति पादयोरपतत्। ततोदयमान इवाहमब्रुवं भवतु मृत्युहस्तवर्त्तिनः किं ममामुष्यां

वैरानुबन्धं नेति तदनुवन्निव कर्णएवैनामशिक्षयम् एवमेवं प्रतिपत्तव्यमिति । सा तु प्रतिपन्नार्था जीव चिरं प्रसीदन्तु ते देवता: देवोप्यङ्गराज: पौरुषप्रीतो मोचयतु त्वाम् एतेऽपि भद्रमुखास्तव हयन्तामिति च्छणादपासरत् । आनीये चाहमारक्षिकनायकस्य शासनाच्चारकम् ।

अथोत्तरेद्युरागत्य इतरतर: सुभगमानी सुन्दरम्मन्य: पितुरत्ययादचिराधिष्ठिताधिकारस्तारुण्यमदादनतिपक्व: कान्तको नाम नागरिक: किञ्चिदिव भर्त्सयित्वा मामभ्यधत्त न चेद्धनमित्रस्याजिनरत्नं प्रतिप्रयच्छसि न चेद्वा नागरिकेभ्यश्चोरितकानि प्रत्यर्पयसि द्रक्ष्यसि पारमष्टादशानां कारणानाम् अन्ते च मृत्युमुखमिति। मया तु स्मयमानेनाभिहितं सौम्य यद्यपि दद्यामाजन्मनोमुषितं धनं न त्वर्थपतिदारापहारिण: शत्रोर्मे मित्रमुषस्य धनमित्रस्य चर्मरत्नप्रत्याशां पूरयेयम् अदत्त्वैव तत् अयुतमपि यातनानामनुभवेयम् इयं मे साधीयसी सन्धेति । तेनैव क्रमेण वर्त्तमाने सान्त्वनतर्ज्जन प्राये प्रतिदिनमनुयोगव्यतिकरेऽनुगुणान्नपानलाभात् कतिपयैरेवाहोभिर्विरोपितव्रण: प्रकृतिस्थोऽहमासम् ।

अथ कदाचिदच्युताम्बरपीतातपत्विषि च्यविणि

वासरे हृष्टवर्णा शृगालिका उज्ज्वलेन वेषेणोपसृत्य दुरस्थानुचरा मामुपश्लिष्या ब्रवीत् आर्य्य दिष्ट्या वर्द्धसे फलिता तव सुनीतिः। यथा त्वयादिष्टे तथा धनमित्रमेत्याब्रुवम्। आर्य्य तवैवमापन्नः [सुहृदित्युवाच] "अहमद्य वेश्यसंसर्गसुलभात् पानदोषाद्दष्टः त्वया पुनरविशङ्कम् अद्यैव राजा विज्ञापनीयः। देव देवप्रसादादेव पुरापि तदर्जितरत्नमर्थपतिमुषितमासादितम् अथ तु भर्त्ता रागमञ्जर्य्याः कश्चिद्दच्धूर्त्तः कलासु कवित्वेषु लोकवार्त्तासु चातिवैचक्षण्यात् मया समसृज्यत तत्सम्बन्धाच्च वस्त्राभरणप्रेषणादिना तद्भार्य्यां प्रतिदिनमन्ववर्त्तं तदभावाशङ्किष्ट निकृष्टाशयतया कितवः। तेन च कुपितेन हृतं तच्चर्म्मरत्नम् आभरणसमुद्गकञ्च तस्याः। सतु भूयस्तेयाय भ्रमन्नग्टह्यत नागरिकपुरुषैः आपन्नेन चामुना अनुसृत्य मदन्यै रागमञ्जरी परिचारिकायै शृगालिकायै पूर्व्वप्रणयानुवर्त्तिना तद्भाण्डनिधानोद्देशः कथितः। ममापि चर्म्मरत्नमुपायोपक्रान्तो यदि प्रयच्छेदिह देवपादैः प्रसादः कार्य्य इति। तथा निवेदितश्च नर-

[सुहृदामुनाचैवमादिष्टोऽस्मीति कचित्पाठः।]

पतिरसुभिर्मामवियोज्य उपच्छन्दनैरेव स्वं ते दापयितुं प्रयतिष्यते तन्नः पथ्यमिति"। श्रुत्वैव च त्वदनुभावप्रत्ययादनतिक्रम्य तेन तत्तथैव सम्पादितम्। अथाहं तदभिज्ञानप्रत्यायितया रागमञ्जर्याः सकाशात् यथेप्सितानि वसूनि लभमाना राजदुहितुरम्बालिकाया धात्रीं माङ्गलिकां त्वदादिष्टेन मार्गेणान्वरञ्जयं तामेव च संक्रमीकृत्य रागमञ्जर्याश्चाम्बालिकायाः सख्यं परमवीवृधम्। अहरहश्च नवनवानि प्राभृतानि उपहरन्ती कथाश्चित्राश्चित्तहारिणीः कथयन्ती तस्याः परं प्रसादपात्रमासम्। एकदा च हर्म्याङ्गणगतायास्तस्याः स्थानस्थितमपि कर्णकुवलयं स्रस्तमिति प्रतिसमादधती प्रमत्तेव प्रच्याव्य पुनरुत्क्षिप्य भूमेः तेन उपकन्यकापुरं कारणेन केनापि भवनाङ्गनं प्रविष्टस्य कान्तकस्योपरि कुहरप्रसक्तपारावतत्रासनापदेशात् प्रहसन्ती प्राहार्षम्। सोऽपि धन्यम्मन्यः किञ्चिदुन्मुखः स्मयमानो मत्कर्मप्रहासितायाः राजदुहितुर्विलासप्रायमाकारमालाभिलाषमूलमिव यथा सङ्कल्पयेत्तथा मयापि संज्ञयैव किमपि चतुरमाचेष्टितम्। आकृष्टधन्वना च मनसिजेन विद्धः सन् दिग्धफलेन पत्रिणातिमुग्धः कथं कथमप्यपासरत्। सायञ्च

राजकन्यकाङ्गुलीयकमुद्रितां वासताम्बूलवरांशुकयुगलभूषणावयवगर्भाञ्च पेटिकां कयाचिद्बालिकया ग्राहयित्वा रागमञ्जर्य्या इति नीत्वा कान्तकस्यागारमगाम् अगाधे च रागसागरे मग्नो नावमिव मामुपलभ्य परमहृष्यत। अवस्थान्तराणि च राजदुहितुः सुदारुणानि व्यावर्णयन्त्या मया स दुर्म्मतिर्दूरमुदमाद्यत। तत्प्रार्थिता चाहं त्वत्प्रियार्थ्हितमिति ममैव मुखताम्बूलोच्छिष्टानुलेपनं निर्म्माल्यं मलिनांशुकञ्चान्येद्युरुपाहरं तदीयानि च राजकन्यार्थमित्यादाय छन्नमेवापाविध्यम्। इत्यञ्च मन्थ,-चितमन्मथाग्निरेकान्ते मयोपमन्त्रितोऽभूत् "आर्य्य लक्षणान्येव तवाविसंवादीनि तथाहि मत्प्रातिवेश्यः कश्चित्कार्त्तान्तिकः कान्तकस्य हस्ते राज्यमिदं पतिष्यति तादृशानि तस्य लक्षणानीत्यादिक्षत्। तदनुरूपमेव च त्वामियं राजकन्यका कामयते तदेकापत्यञ्च राजा तया त्वां समागतमुपलभ्य कुपितोपि दुहितुर्मरणभयान्नोच्छेत्स्यति प्रत्युत प्रापयिष्यत्येव यौवराज्यम्। इत्यञ्चायमर्थोऽर्थानुबन्धी किमिति तात नाराध्यते। यदि कुमारीपुरप्रवेशाभ्युपायं नावबुध्यसे ननु बन्धनागारभित्तेर्व्यामत्रयमन्तरालमारामप्राकारस्य केनचित्तु हस्तवर्तेकागार-

केण तावतीं सुरङ्गां कारयित्वा प्रविष्टस्योपवनं तवोपरिष्टादस्मदायत्तैव रच्चा । रक्ततरोहि तस्याः परिजनोन रहस्यं भेत्स्यतीति"। सोऽब्रवीत् "साधु भद्रे दर्शितम् अस्ति कश्चित्तस्करः खननकर्म्मणि सगरसुतानामिवान्यतमः सचेल्लब्धः चणेनैतत्कर्म्म साधयिष्यतीति"। कतमोऽसौ किमिति न लभ्यतइति मयोक्ते येन तद्वनमित्रस्य चर्म्मरत्नं मुषितमिति त्वामेव निरदिच्चत् । "यद्येवम् एहि त्वयास्मिन् कर्म्मणि साधिते चित्रैरुपायैस्त्वामहं मोचयिष्यामीति शपथपूर्वं तेन सन्धाय सिद्धेऽर्थे भूयोपि निगड़यित्वा योऽसौ चौरः स सर्व्वयोपक्रान्तो न तु दृष्टतमः प्रकृष्टवैरस्तदजिनरत्नं दर्शयिष्यतीति राज्ञे विज्ञाप्य चित्रसेनं घातयिष्यसि । तयाच सति अर्थः सिध्यति रहस्यञ्च न स्रवतीति" मयोक्ते सोऽतिहृष्टः प्रतिपद्य मामेव त्वदुपप्रलोभने नियुज्य वहिरवस्थितः प्राप्तरूपमितः परं चिन्त्यतामिति ।

प्रीतेन च मयोक्तं मदुक्तमल्पं त्वन्नयएवात्र भूयान् आनयैनमिति । अथानीतेनामुना मन्मोचनाय शपथः कृतः मया च रहस्यानिर्भेदाय । विनिगड़ीकृतश्च स्नानभोजनविलेपनान्यनुभूय नित्यान्धकारात् काराभित्तिकोणादारभ्योरगास्येन सुरङ्गा-

मकरवम्। अचिन्तयञ्चैवं हन्तुमनसैवामुना मन्मोचनाय शपथः कृतः तदमुं हत्वापि नासत्यवाददोषेण स्पृश्ये इति। निष्पततश्च मे निगड़नाय प्रसार्य्यमाणे पाणेस्तस्य पादेनोरसि निहत्य पतितस्य तस्यैवासिधेन्वा शिरोन्यकृतम्। अकथयञ्च शृगालिकां भण भद्रे कथम्भूतः कन्यापुरसन्निवेशः महानयं प्रयासो मा वृथैव भूत् अमुत्र किञ्चिच्चोरयित्वा निवर्त्तिष्यइति। तदुपदर्शितविभागश्चावगाह्य कन्यान्तःपुरं प्रज्वलत्सु मणिप्रदीपेषु नैकक्रीड़ाखेदसुप्तस्य परिजनस्य मध्ये महार्हरत्नप्रत्युप्त सिंहाकारदन्तपादे हंसतूलगर्भकोमलशय्योपधानशालिनि कुसुमलवच्छुरितपर्य्यन्ते पर्य्यङ्कतले दक्षिणपादपार्ष्ण्यधोभागानुवेल्लितेतर चरणाग्रपृष्ठम् ईषद्विवृतमधुरगुल्फसन्धि परस्पराश्लिष्टजङ्घाकाण्डम् आकुञ्चितकोमलोभयजानु किञ्चिद्वेल्लितोरुदण्डयुगलम् अधिनितम्बस्तस्तमुक्तैकभुजलताग्रपेशलम् अपाश्रयान्तनिहिताकुञ्चितेतरभुजलतोत्तानतलकरकिसलयम् आभुग्नश्रोणिमण्डलम् अतिश्लिष्टचीनांशुकान्तरीयम् अनतिवलिततनुतरोदरम् अणुतरनिःश्वासारम्भकम्पमानकठोरकुचकुट्मलम् आतिरश्चीनबन्धुरशिरोधरोद्देशदृश्यमाननिष्टप्ततपनीयसूत्रपर्य्यस्तपद्म-

रागरुचकम् अर्द्धलच्याधरकर्णपाशनिभृतकुण्डलम् उपरिपराष्टत्तश्रवणपाशरत्नकर्णिकाकिरणमञ्जरी पिञ्जरितविषमव्याविद्धाशिथिलशिखण्डबन्धम् आत्मप्रभापटलदुर्लच्च्य पाटलोत्तराधरविवरं गण्डस्थलीसंक्रान्तहस्तपल्लवदर्शितकर्णावतंसकृत्यम् उपरिकपोलादर्शतलनिषिक्तचित्रवितानपत्वजातिजनित विशेषकक्रियम् आमीलितलोचनेन्दीवरम् अविभ्रान्तभ्रूपताकम् उद्भिद्यमानश्रमजलपुलकभिन्नशिथिलचन्दनतिलकम् आननेन्दुसम्मुखालककलतञ्च विस्रब्धप्रसुप्ताम् अतिधवलोत्तरच्छदनिमग्नप्रायैकपार्श्वं तया चिरविलसनखेदनिश्चलां शरदम्भोधरोत्सङ्गशायिनीमिव सौदामिनीं राजकन्यामपश्यम्।

दृष्ट्वैव स्फुरदनङ्गरागश्चकितश्चोरयितव्यनिस्पृहस्तयैव तावच्चोर्य्यमाणहृदयः किंकर्त्तव्यतामूढ़ः चणमतिष्ठम्। अतर्कयञ्च नचेदिमां वामलोचनाममुयां न क्षम्यति मां जीवितुं वसन्तबन्धुः। असङ्कितित परामृष्टा चेयमतिबाला व्यक्तमार्त्तरवेण विहन्यान्मे मनोरथम् ततोऽहमेवाश्नीये तदियमत्व प्रतिपत्तिरिति नागदन्तलग्ननिर्य्यास वालुकाकल्कावर्णितं फलकमादाय मणिसमुद्गकात् वर्णवर्त्तिकामुद्धृत्यतां

तथाश्रयानां तस्याश्च मामाबद्धाञ्जलिं चरणलग्न-मालिखम्। आर्य्याञ्चैताम्।

त्वामयमाबद्धाञ्जलि दासजनस्त्विममर्थमर्थयते।
स्वपिहि मया सह सुरतव्यतिकरखिन्नैव मा मैवम्॥

हेमकरण्डकाच्च वासताम्बुलवीटिकां कर्पूरस्फु-टिकां पारिजातकञ्चोपयुज्य अलक्तकपाटलेन तद्रसेन सुधाभित्तौ चक्रवाकमिथुनं निरष्ठीवम्। अङ्गुलीय-कविनिमयञ्च कृत्वा कथंकथमपि निरगाम्। सुरु-ङ्गया च प्रत्येत्य बन्धनागारं तत्र बद्धस्य नागरिकव-रस्य सिंहघोषनाम्नस्तेष्वेव दिनेषु मित्रत्वेनोपचरि-तस्य एवं मया हृतस्तपस्वी कान्तकस्त्वया प्रति-भिद्य रहस्यं लब्धव्यो मोक्षइत्युपदिश्य सह शृगा-लिकया निरक्रामिषम्।

नृपतिपथे च समागत्य रक्षिकपुरुषैरग्रहस्ये अचिन्तयञ्च अलमस्मि जवेनापसर्तुमनाम्रष्टएवैभिः एषा पुनर्वराकी गृह्येत तदिदमत्र प्राप्तरूपमिति। तानेव चपलमभिपत्य स्वपृष्ठसमर्पितकूर्परः परा-ङ्मुखः स्थित्वा यद्यहमस्मि तस्करः भद्रा बध्नीत मां युष्माकमयमधिकारोन पुनरस्या वर्षीयस्याइत्यवा-दिषम्। सा तु तावतोन्नीत मदभिप्राया तान् सम-गाममभ्युपेत्य भद्रमुखा ममैष पुत्रो वायुग्रस्तः चि-

रश्चिकित्सितः पूर्वेद्युःप्रसन्नकल्पः प्रकृतिस्थएव जातः जातास्थया मया बन्धनान्निष्क्रमय्य स्नापितोऽनुलेपितश्च परिधाप्य निष्प्रवाणियुगलम् अभ्यवहार्य्य परमान्नमौशीरेऽद्य कामचारः कृतोऽभूत् । अथ निशीथे भूयएव वायुनिघ्नोनिहत्य कान्तकं नृपतिदुहितरं रमेयमिति रंहसा परेण राजपथमभ्यपतत् । निरूध्य चाहं पुत्रमेवं गतमस्यां वेलायामनुधावामि तत्प्रसीदत बध्वैनं मह्यमर्पयतेति यावदसौ क्रन्दति तावदहं स्थविरे केन देवोमातरिश्वा बद्धपूर्व्वः किमेते काकाः शौण्डेयस्य मे निग्रहीतारः शान्तं पापमित्यभ्यधावम् । असावप्यमीभिस्त्वमेवोन्मत्ता या अनुन्मत्तङ्गत्युन्मत्तं मुक्तवती कस्तमिदानीं बध्नातीति निन्दिता कदर्थिता रुदत्येव मामन्वधावत् । गत्वा च रागमञ्जरीगृहं चिरवियोगविक्लवामिमां बहुविधं समाश्वास्य तां निशाशेषमनयं प्रभाते पुनरुदारकेण च समगच्छम् ।

अथ भगवन्तं मरीचिं वेशकृच्छ्रादुत्थाय पुनः प्रतिपन्नतपःप्रभाव प्रत्यापन्नदिव्यचक्षुषमुपसंक्रम्य तेनास्मत्प्रवस्थूतत्वद्दर्शनमवगमितः । सिंहघोषश्च कान्तकापचारं निर्भिद्य तत्पदे प्रसन्नेन राज्ञा प्रतिष्ठापितः तेनैव चारकसुरङ्गापथेन कन्यापुरप्रवेशं भूयोपि

मे समपादयत्। समगंसि चाहं शृगालिकामुखविस्तृतवार्त्तानुरक्तया राजदुहिता। तेष्वेव दिवसेषु चण्डवर्म्मा सिंहवर्म्मावधूतदुहितृप्रार्थनः कुपितोऽभियुज्य पुरमवारुणत्। धर्मर्षणश्चाङ्गराजो यावदरिः पारग्रामिकं विधिमाचिकीर्षति तावत्स्वयमेव सालं निर्भिद्य प्रत्यासन्नानपि सहायानप्रतीक्षमाणो निर्गत्याभ्यधिकबलेन विद्विषा महति साम्पराये भिन्नवर्म्मा सिंहवर्म्मा बलादगृह्यत। अम्बालिका च बलवदभिगृह्य चण्डवर्म्मणा हठात् परिणेतुमात्मभवनमनीयत कौतुकञ्च स किल क्षपावसाने विवाहइत्युबन्धात्। अहञ्च धनमित्रगृहे तद्विवाहार्थैव पिनद्धमङ्गलप्रतिसरस्तमेवमवोचं सखे समापतितमेवाङ्गनायाभिसरं राजमण्डलं सुगूढमेव सम्भूय पौरवृद्धैस्तदुपावर्त्तय उपावृत्तञ्च कृतकृत्य कृत्तशिरसमेव प्रातर्द्रक्ष्यसीति। तथा च तेनाभ्युपगते गतायुषोऽमुष्य भवनस्तुमुलवाकुलम् उपसमाधीयमानपरिणयोपकरणम् इतस्ततःप्रवेशनिर्गमप्रवृत्तलोकसम्पातम् अलक्ष्यशल्किकः सह प्रविश्यमङ्गलपाठकैः अम्बालिकापाणिपल्लवम् अग्नौ साक्षिण्याथर्वणेन विधिनार्प्यमाणमादित्समानस्य आयामिनं बाहुदण्डमाकृष्य छुरिकयोरसि प्राहार्षम्। स्फुरतश्च

कतिपयानन्यानपि यमविषयमगमयं हतविध्वस्तञ्च तद्वृन्दमनुविचरन् वेपमानमधुरगात्रीं विशाललोचनामभिनिशाम्य तदालिङ्गनसुखमनुबुभूषुस्तामादाय गर्भगृहमविशम्। अस्मिन्नेव क्षणे तवास्मि नवाम्बुवाहगम्भीरेणस्वरेणानुगृहीतइति।

श्रुत्वा च स्मित्वा च देवोऽपि राजवाहनः कथमसि कार्कश्येन कर्णीसुतमप्यतिक्रान्तइत्यभिधाय पुनरवेक्ष्योपहारवर्म्माणम् आचक्ष्व तवेदानीमवसरइत्यभाषत।

इति दण्डिनः कृतौ दशकुमारचरिते अपहारवर्म्मचरितन्नाम द्वितीय उच्छ्वासः।



## उपहारवर्म्मचरितन्नाम



## तृतीय उच्छ्वासः।

सोऽपि स्मितं प्रणम्यारभताभिधातुम् एषोऽहमस्मि पर्यटन्नेकदा गतो विदेहेषु मिथिलामप्रविश्यैव बहिः क्वचिन्मठिकायां विश्रमितुमेत्य कयापि वृद्धतापस्या दत्तपाद्यः क्षणमलिन्दभूमाववास्थिषि। तस्यास्तु मद्दर्शनादेव किमपि बहुधारमश्रु प्रावर्त्तत। किमेतदम्ब कथय कारणमिति पृष्टा सकरुणमाचष्ट। जैवातृक ननु श्रूयते पतिरस्या मिथिलायाः प्रहारवर्म्मा नामासीत्। तस्य खलु मगधराजो राजहंसः परं मित्रमासीत्। तयोश्च वल्लभे बलशम्बरयोरिव वसुमतीप्रियम्वदे सख्यमप्रतिममधाताम्। अथ प्रथमगर्भाभिनन्दिताञ्च प्रियसखीं दिदृक्षुः प्रियम्वदा वसुमतीं सह भर्त्रा पुष्पपुरमगमत्।

अस्मिन्नेव च समये मालवेन मगधराजस्य महज्जन्यमजनि तत्र लेशतोऽपि दुर्लक्षां गतिमगमन्मगधराजः। मैथिलस्तु मालवेन्द्रप्रयत्नप्रापितः स्ववि-

षयं प्रतिनिवृत्तो ज्येष्ठस्य संहारवर्म्मणः सुतैर्विकट-वर्म्मप्रभृतिभिर्व्याप्तं राज्यमाकर्ण्य स्वस्त्रीयात् सुह्म-पतेर्दण्डावयवमादित्सुरटवीपथमवगाह्य लुब्धक-लुप्तसर्व्वस्वोऽभूत्। तत्सुतेन च कनीयसा हस्त-वर्त्तिना सहैकाकिनी वनचरशरवर्षभयपलायिता वनमगाहिषि तत्र च मे शार्दूलनखावलीढ़निपति-तायाः पाणिभ्रष्टः स बालकः कस्यापि कपिला-शवस्य क्रोड़मभ्यलीयत। तच्छवाकर्षिणश्च व्याघ्र-स्या सूनिषुरिष्वसनयन्त्रमुक्तः क्षणाद्दलिवत्। भि-ल्लदारकैः स बालोऽपाहारि। सा त्वहं मोहसुप्ता केनापि वृष्णिपालेनोपनीय स्वं कुटीरमावेश्य कृप-योपक्रान्तव्रणा स्वस्थीभूय स्वभर्त्तुरन्तिकमुपतिष्ठा-सुर सहायतया यावद्व्याकुलीभवामि तावन्ममैव दुहिता सह यूना केनापि तमेवोद्देशमागमत्।

सा भृशं रुदितान्ते च सा सार्थघाते स्वहस्त-गतस्य राजपुत्रस्य किरातभर्त्तृहस्तगमनम् आत्म-नश्च केनापि वनचरेण व्रणविरोपणं स्वस्थायाश्च पुनस्तेनोपयन्तुं चिन्तितायाः निकृष्टजातिसंसर्ग वैक्लव्यात् प्रत्याख्यानपारुष्यं तदक्षमेण चामुना विवि-क्तविपिने स्वशिरःकर्त्तनोद्यमं तेन यूना यदृच्छया दृष्टेन तस्य दुरात्मनो हननम् आत्मनश्चोपयमनमि-त्यकथयत्। स च दृष्टो मिथिलेन्द्रस्यैव कोपि सेवकः

कारणविलम्बी तन्मार्गानुसारी जातः सह तेन भर्त्तुरन्तिकमुपसृत्य पुत्र वृत्तान्तेन श्रोत्रमस्य देव्याः प्रियम्बदायाश्चादहाव। स च राजा दिष्ट दोषात् ज्येष्ठपुत्रैश्चिरं विरुध्य पुनरसहिष्णुतयातिमात्रं चिरं प्रयुद्ध्य बद्धः देवी च बन्धनं गमिता। दग्धा पुनरहमस्मिन्नपि वार्द्धके जीवितमपारयन्ती हातुं प्रव्रज्यां किलाग्रहीषम्। दुहिता तु मम हतजीविताकृष्टा विकटवर्ममहिषीं कल्पसुन्दरीं किलाशिश्रियत्। तौ चेद्राजपुत्रौ निरुपद्रवावेवावर्द्धिष्येताम् इयता कालेन तवेमां वयोऽवस्थामस्पृक्ष्येताम्। तयोश्च सतोर्न दायादानरेन्द्रस्य प्रसह्य कारिणो भवेयुरिति प्रवृद्धमन्युरभिरुरोद।

श्रुत्वा च तां तापसीगिरमहमपि प्रवृद्धवाष्पो निगूढमभ्यधां यद्येवमम्ब समाश्वसिहि। नन्वस्ति कश्चिन्मुनिस्त्वया तदवस्थया पुत्राभ्युपपादनार्थं याचितस्तेन स लब्धो वर्द्धितश्च। वार्त्तेयमतिमहती किमनया सोऽहमस्मि। शक्यश्च मयासौ विकटवर्मा यथाकथञ्चिदुपश्लिष्य व्यापादयितुम्। अनुजाः पुनरतिबहवस्तैरपि घटन्ते पौरजानपदाः भ्रान्तु न कश्चिदिहत्यः ईदृक्तया जनो जानाति। पितरावपि तावन्माञ्च न संविदाते किमुतेतरे तदेनमर्थमुपायेन साधयिष्यामीत्यगादिषम्। सा तु वृद्धा

सरुदितं परिष्वज्य मुहुः शिरस्युपाघ्राय प्रस्नुतस्तनी सगद्गदमगदत्। वत्स चिरञ्जीव भद्रं तव प्रसन्नोऽद्य भगवान् विधिः अद्यैव प्रहारवर्म्मसुश्रुधि विदेहा-जाताः यतः प्रलम्बमानपीनबाहुर्भवानपारं वत-शोकसागरमद्योत्तारयितुं स्थितः अहो महद्भाग-धेयं देव्याः प्रियसहायायाः इति हर्षनिर्भरा स्नान-भोजनादिना मामुपाचरत् अशिश्रियञ्चास्मिन्मठै-कदेशे निशि कटशय्याम्। अचिन्तयञ्च विनोपा-धिनायमर्थो न साध्यः स्त्रियश्चोपाधीनामुद्भवक्षे-त्रम्। अतोऽन्तःपुरवृत्तान्तमस्या अवगम्य तद्-द्वारेण किञ्चिज्जालमाचरेयमिति। चिन्तापन्नएव मयि महार्णवोदरोन्मग्नमार्त्तण्डतुरगनिःश्वासर-यावधूतेव व्यावर्त्तत त्रियामा। समुद्रगर्भवासजडी-कृतइव मन्दप्रतापोदिवसकरः प्रादुरासीत्।

उत्थायावसायितदिनमुखनियमविधिस्तां मे मातरमवादिषम्। अम्ब जानस्य विकटवर्म्मणः कञ्चिदन्तःपुरवृत्तान्तमभिजानासीत्यनवसितवचनएव मयि काचिदङ्गना प्रत्यदृश्यत। ताञ्चावेक्ष्य सा मे धात्री हर्षास्रुकुण्ठितकण्ठमाचष्ट। पुत्रि पुष्क-रिके पश्य भर्तृदारकम् अयमसावकृपया मया वने परित्यक्तः पुनरप्येवमागतइति। सा तु हर्षनिर्भर-निपीडिता चिरं प्ररुद्य बहुविलप्य शान्ता पुनः

स्वमाता राजान्तःपुरवृत्तान्ताख्याने न्ययुज्यत। उक्तञ्च तया कुमार कामरूपेश्वरस्य कलिन्दवर्म्म-नाम्नः कन्या कल्पसुन्दरीनाम कामकलासु रूपे चाप्सरसोऽप्यतिक्रान्ता पतिमप्यभिभूय वर्त्तते तदेक-वल्लभः सतु बह्ववरोधोऽपिविकटवर्म्मेति। तामवो-चम् उपसर्पैनां मत्प्रयुक्तैर्गन्धमाल्यैरुपजनय चास्मा नदोषनिन्दादिना स्वभर्त्तरि द्वेषम्। अनुरूपभर्तृगा-मिनीनाञ्च वासवदत्तादीनां वर्णनेन ग्राहयानुशयम्। अवरोधनान्तरेषु चामुष्य विलसितानि सुगूढ़ान्यपि प्रयत्नेनान्विष्य प्रकाशयन्ती मानमस्या वर्द्धयेति। पुनरिदमम्बामवोचम् इत्यमेव त्वयाप्यनन्यव्यापारया नृपाङ्गनासावुपस्थातव्या प्रत्यहञ्च यद्यत्तत्र वृत्त-जातं तदस्मि त्वयाववोध्यः मदुक्त्या पुनरियमुदर्कस्वा-दुनोऽस्मत्कर्म्मणः प्रसाधनाय छायेवानपायिनी कल्प-सुन्दरीमनुवर्त्ततामिति। ते च तमर्थं तथैवान्व-तिष्ठताम्।

केषुचिद्दिनेषु गतेषु आचष्ट मां मदम्बा वत्स माधवीव पिचुमर्दाश्लेषिणी यथासौ शोच्यमात्मानं मन्येत तथोपपाद्य स्थापिता किं भूयः कृत्यमिति। पुनरहमभिलिख्यात्मनः प्रतिकृतिमियममुष्यै नेया। नीताञ्चैनां निर्वर्ण्य सा नियतमेवं वक्ष्यति नन्वस्ति कश्चिदीदृशाकारः पुमानिति प्रतिब्रूह्येनां यदि

स्यात्ततः किमिति तस्य यदुत्तरं सा दास्यति तदह-मस्मि प्रतिबोधनीयइति । सा तथेति राजकुल-मुपसंक्रम्य प्रतिनिवृत्ता मामेकान्ते न्यवेदयत् वत्स दर्शितोऽसौ चित्रपटस्तस्यै मत्तकाशिन्यै । चित्री-यमाणा चासौभुवनमिदं सनाथीकृतं येन देवेऽपि कुसुमधन्वनि नेदृशी वपुःश्रीः सन्निधते चित्रमेतच्चि-त्रतमं नच तमवैमि यईदृशमिदमिहत्यो निर्मिमीते केनेदमालिखितमित्यादृतवती व्याहृतवती च । मया च स्मेरयोदीरितं देवि सदृशमाज्ञापयसि भगवान् मकरकेतुरेवंसुन्दरइति न शक्यमेव सम्भावयितुम् अथ च विस्तीर्णेयमर्णवनेमिः क्वचिदीदृशमपि रूपं दैवशक्त्या सम्भवेत् अथ तु यद्येवंरूपोरूपानुरूपशि-ल्पशीलविद्याज्ञानकौशलोयुवा महाकुलीनश्च कश्चि-त्सन्निहितः स्यात् सकिं लभ्यतइति । तयोक्तमस्व किं ब्रवीमि शरीरं हृदयं जीवितमिति सर्वमिदम-ल्पमनर्हञ्च ततो न किञ्चिल्लप्स्यते नचेदयं विप्रल-म्भस्यामुष्य दर्शनानुभवेन यथेदं चक्षुश्चरितार्थं भवे-त्तथानुग्रहः कार्य्यइति । भूयोऽपि मया दृढ़तरी-कर्त्तुमुपन्यस्तम् अस्ति कोऽपि राजसूनुरवरुद्धश्चरन् अमुष्य वसन्तोत्सवे सह सखीभिर्नगरोपवनविहारि-णी रतिरिव विग्रहिणी यदृच्छया दर्शनपथं ग-तासि गतश्चासौ कामशरैकलक्ष्यतां मामन्ववर्त्तिष्ट

मया च वामन्योन्यानुरूपैरन्यदुर्लभैराकारादिभि-र्गुणातिशयैश्च प्रेर्यमाणा तया तद्रचितैरेव कुसुम-शेखरस्रगनुलेपनादिभिश्चिरमुपासितास्मि सादृश्यञ्च स्वमतेन स्वयमेवाभिलिख्य त्वत्समधिगमाय गाढं त्वद्दर्शनाय प्रेषितम्। एष चेदर्थो निश्चितस्तस्मा-मुष्यातिमानुषप्राणसत्व प्रज्ञाप्रकर्षस्य न किञ्चिद्-दुष्कृतं नाम तमद्यैव दर्शयेयं सङ्केतोदेयद्दति।

तया तु किञ्चिदिव ध्यात्वा पुनरभिहितम् "अम्ब तव नैतदिदानीं गोप्यतमम् अतः कथयामि। मम तातस्य राज्ञा प्रहारवर्म्मणा सह महती प्रीतिरा-सीत्। मातुश्च मे मानवत्याः प्रियवयस्या देवी प्रियम्वदासीत्। ताभ्यां पुनरजातापत्याभ्यामेव कृतः समयोऽभूत् आवयोः पुत्रवत्याः दुहितृमत्या दुहिता देयेति। ततस्तु मां जातां प्रनष्टापत्या प्रियम्वदेति प्रार्थयमानाय विकटवर्म्मणे दैवाद्दत्त-वान्। अयञ्च निष्ठुरः पितृद्रोही नात्युपपन्नसंस्थानः कामोपचारेषु अलब्धवैचक्षण्यः कलासु काव्यनाट-कादिषु मन्दाभिनिवेशः शौर्य्योन्मादी दुर्विकत्थनो-ऽनृतवादी चास्थानवर्षी नातिरोचते ममैष भर्त्ता। विशेषतस्त्वेषु वासरेषु यदयमुद्याने मदन्तरङ्गभूतां पुष्करिकामप्युपान्तवर्त्तिनीमनादृत्य मय्यावद्धसापत्न्य-मत्सरामनात्मज्ञामात्मनाटकीयां रमयन्तिकां नामा-

पत्यनिर्विशेषमस्मात्संवर्द्धिताया श्चम्पकलतायाः स्वयमवचिताभिः सुमनोभिरलमकार्षीत् । मदुपभुक्तमुक्ते चित्रकूटगर्भवेदिकागते रत्नतल्पे तया सह व्यहार्षीत् । अयोग्यश्च पुमानवज्ञातुश्च प्रवृत्तस्तत्किमित्यपेक्ष्यते । परलोकभयञ्चैहिकेन दुःखेनान्तरितम् । अविषह्यं हि योषितामनङ्गशरनिषङ्गीभूतचेतसामनिष्टजनचिरसंवाससमन्त्रणादुःखम् । अतोऽमुना पुरुषेण मामद्योद्यानमाधवीगृहे समागमय । तद्वार्त्ताश्रवणमात्रेणैव हि ममातिमात्रं मनोऽनुरक्तम् । अस्ति चायमर्थराशिनेनामुं स्वे पदे प्रतिष्ठाप्य तमेवात्यन्तमुपचर्य जीविष्यामीति"। मयापि तदभ्युपेत्य प्रत्यागतम् । अतःपरं भर्तृदारकः प्रमाणमिति ।

ततस्तस्या एव सकाशादन्तःपुरसन्निवेशमन्तर्वंशिकपुरुषस्थानानि प्रमदवनप्रदेशानपि विभागेनावगम्य अस्तगिरिशिखरपातचूर्णितशोणितद्रव शोणीभवति भानुबिम्बे पश्चिमाम्भोधिपयःपातनिर्वापितपतङ्गाङ्गारधूमसम्भारइव भरितनभसि तमसि विजृम्भिते परदार परामर्शोन्मुखस्य ममाचार्यकमिव कर्त्तुं मुत्थिते गुरुपारग्रहग्रहणश्लाघिनि ग्रहागेसरे क्षपाकरे कल्पसुन्दरीवदनपुण्डरीकेणेव मद्दर्शनातिरागप्रथमोपनतेन स्मयमानेन चन्द्रमण्डलेन स-

न्धुच्यमाणतेजसि त्रिभुवनविजिगीषोद्यते देवे पुष्पध-न्वनि यथोचितं शयनीयमभजे। व्यचीचरञ्च सिद्धप्रा-यणवायमर्थः किन्तु परकलत्रलङ्घनाद्धर्म्मपीड़ा भवेत् साप्यर्थकामयोर्द्वयोरुपलम्भा शास्त्रकारैरनुमतैवेति। गुरुजन बन्धमोचोपायाभिसन्धिना मया चैष व्यति-क्रमः कृतः। तदपि पापं निर्हत्य कियत्यापि धर्म्म-कलया मां समग्रयेदिति। अपि त्वेतदाकर्ण्य देवो राजवाहनः सुहृदो वा किं नु वक्ष्यन्तीति चिन्ताप-राधीनएव निद्रया पराम्मृश्ये। अदृश्यत च स्वप्ने भगवान् [भर्गः आह स्म च "सौम्य उपहारवर्म्मन् मास्म ते दुर्व्विकल्पोऽभूत् यतस्त्वमसि मदंशः मज्ज-टाभारलालनोचिता अमरसरिदसौ वरवर्णिनी तास्च कदाचिद्गजाननो जलक्रीड़ां कुर्व्वन्नतिव्यगा-हत। सा च सपत्नीतनयविहितां विलोड़नाम-सहमाना तमशपत् एहि मर्त्यत्वमिति। सोऽपि अहेतुक शापप्रदानात् क्रुद्धस्तामशपत् यथेह बहु-भोग्या तथा प्राप्यापि मानुष्यकमनेकसाधारणी भ-वेति। ततस्तेन प्रतिशप्ता सा विलप्येव मामुपसृत्य सगद्गदमगदत् स्वामिन्नहमनवरतभवच्चरणवरिव-

[हस्तिवक्त्र आह स्म च। सौम्य उपहारवर्मन् मास्म ते दुर्वि-कल्पोऽभूत् यतस्त्वमसि मदंशः शङ्करजटाभारलालनोचिताऽमर-सरिदसौ वरवर्णिनी सा कदाचिन्मद्विलोड़नमसहिष्णुर्मामश-

स्याविधायिनी न शापार्हेत्याकर्ण्य कृपाक्रान्तमनसा मयोक्तं प्रिये नास्य शापोऽन्यथा भवितुमर्हति परं त्वदनुग्रहार्थमहमात्मनोऽंशं द्विधा विभज्य विकटवर्म्मरूपेण मिथिलापतिप्रहारवर्म्मात्मजोपहारवर्म्मात्मना च मर्त्यलोकेऽवतरिष्यामि त्वञ्च कामरूपाधिपतेः कलिङ्गवर्म्मनाम्नः कन्या कल्पसुन्दरी नाम भूत्वा ज्यायसा मदंशेन विकटवर्मणा प्रथममल्पीयांसमनेहसं सङ्गता तस्मिन्नुपहारवर्म्मणि स्वमूर्त्त्यैव लयमुपगते पुनरुपहारवर्मात्मकं कनीयांसं मदंशमुपलभ्य तेन सार्कं विविधसुखोपभोगमनुभविष्यसि] तदयमर्थो भव्यो भवता निराशङ्कयइति।

प्रतिबुध्य च प्रीतियुक्तस्तदहरपि प्रियासङ्केतव्यतिकरादिस्मरणेनानैषम्। अन्येद्युरनन्यव्याप्तिरनङ्गो मय्येव इषुवर्षमवर्षत्। अशुष्यच्च ज्योतिष्मतः प्रभामयं सरः। प्रासरच्च तिमिरमयः कर्द्दमः। कार्द्दमिकनिवसनश्च दृढ़तरपरिकरः खड्गपाणिरुपसंभृतप्रस्तुतोपस्करः स्मरन् मातृदत्तान्यभिज्ञानानि राजमन्दिरपरिखामुदम्भसमुपातिष्ठम्। अ-

मत्। एहि मर्त्त्यत्वमिति। शप्यत च मया यथेह बहु भोग्या तथा प्राप्याऽपि मानुष्यकमनेकसाधारणी भवेति। अभ्यर्थिततया आहल्यैकपूर्वा पुनस्त्वामुपचर्य्य यावज्जीवं रमेयमितीति पाठान्तरम्।]

योपखातं मातृगृहद्वारे पुष्करिकया प्रथमसन्निधापितां वेणुयष्टिमादाय तया शायितया च परिखां स्थापितया च प्राकारमत्यलङ्घयम्। अधिरुह्य पक्वेष्टकचितेन गोपुरोपरितलाधिरोहिणा सोपानपथेन भुवमवातरम्। अवतीर्णश्च वकुलवीथीमतिक्रम्य चम्पकावलिवर्त्मना मनागिवोपसृत्योत्तराहि करुणं चक्रवाकमिथुनरवमशृणवम्। पुनरुदीचा पाटलापथेन स्पर्शलभ्यविशालसौधकुल्योदरेण शरक्षेपमिव गत्वा पुनः प्राचा पिण्डीभाण्डीरखण्डमण्डितोभयपार्श्वेन सैकतपथेन किञ्चिदन्तरमतिक्रम्य पुनरवाचीं चूतवीथीमगाहिषि। ततश्च गहनतरमुदरोपरचितरत्नवेदिकं माधवीलतामण्डपमीषद्विवृतसमुद्गकोन्मिषितभासा दीपवर्त्या न्यरूपयम्। प्रविश्य चैकपार्श्वे फुल्लपुष्पनिरन्तरकुरण्टपोतपंक्तिभित्तिपरिगतं गर्भगृहम् अवनिपतिताकणाशोकशाखामयम् अभिनवकुसुमकोरकपुलकलाञ्छितं प्रत्यग्र[प्रबाल]पटलपाटलं कपाटमुद्घाट्य प्राविक्षम्। तत्र चासीद्विस्तीर्णं कुसुमशयनं सुरतोपकरणवस्तुगर्भाश्च कमलिनीपलाशसम्पुटाः दन्तमयस्तालवृन्तः सुरभिसलिलभरितश्च भृङ्गारकः समुपविश्य मुहूर्तं विश्रान्तः परिमलमतिशय-

[वकुलपाटलीति क्वचित्पाठः]

वन्तमाघ्रासिषम् अश्रौषञ्च मन्दमन्दं पदशब्दम्। श्रुत्वैव सङ्केतगृहान्निर्गत्य रक्ताशोकस्कन्धपार्श्व-व्यवहिताङ्गः स्थितोऽस्मि। सा च सुभ्रूः सुशीमकामा शनैरुपेत्य तत्र मामदृष्ट्वा बलवदव्यथिष्ट। व्यसृजच्च मत्तराजहंसीव कण्ठरागवल्गुगद्गदां गिरं "व्यक्तमस्मि विप्रलब्धा नास्त्युपायः प्राणितुम् अयि हृदय किमिदमकार्य्यं कार्य्यवदध्यवसाय तदसम्भवे किमेवमुत्ताम्यसि। भगवन् पञ्चबाण कस्तवापराधः कृतोमया यदेवं दहसि नच भस्मीकरोषीति"।

अथाहमाविर्भूय विवृतदीपभाजनो भामिनि ननु बह्वपराद्धं भवत्या चित्तजन्मनः यदमुष्य जीवित-भूतां रतिमाकृत्या कदर्थितवती धनुर्यष्टिं भ्रूल-ताभ्यां भ्रमरमालामयीं ज्यां नीलालकद्युतिभिः अस्त्राण्यपाङ्गवीक्षितैः महारजनध्वजपटांशुकं दश-नच्छदमयूखजालैः प्रथम सुहृदं मलयमारुतं परि-मलपटीयसा निश्वासपवनेन परभृतरुतमति मञ्जुलैः प्रलापैः पुष्पमयीं पताकां भुजयष्टिभ्यां दिग्विजया-रम्भपूर्णं कुम्भमिथुनमुरोजयुगलेन क्रीड़ासरोनाभि-मण्डलेन सन्नाह्यरथमण्डलं श्रोणीमण्डलेन भवन-रत्नतोरणस्तम्भयुगलमूरुयुगलेन लीलाकर्णकिसलयं चरणतलप्रभाभिः अतः स्थानएव त्वां दुनोति मकर-केतुः। मां पुनरनपराधमधिकमायासयतीत्येष एव

तस्य दोषः। तत्प्रसीद सुन्दरि जीवय मां जीवनौषधै-
रिवापाङ्गैरनङ्गभुजङ्गदष्टमित्याश्लिष्टवान् अरीरमच्च
रागावेशपेशलां विशाललोचनाम्। अवसितार्थाच्च
आरक्तचिकुरितेक्षणाम् ईषत्स्वेदरेखोद्भिदजर्जरक-
पोलमूलाम् अनर्गल कलप्रलापिनीमकरुणदशन-
कररुहार्पण व्यतिकराम् अत्यर्थपरिश्लथाङ्गीमार्त्ता-
मिव लक्षयित्वा मानसीं शारीरीञ्च धारणां शिथिल-
यन् आत्मानमपि तया समानार्थमापादयम्। तत्-
क्षणविमुक्तसङ्गतौ रतावसानिकविधिमनुभवन्तौ चि-
रपरिचिताविवातिरूढ़विस्रम्भौ क्षणमवातिष्ठावहि।
पुनरहमुष्णमायतञ्च निश्वस्य किञ्चिद्दीनदृष्टिः सच-
कित प्रसारितायां भुजाभ्यामनतिपीड़ं परिष्वज्य
नातिविशदमचुम्बिषम्। अश्रुमुखी तु सा यदि प्र-
यासि नाथ प्रयातं मे जीवितं गणय नय मामपि न-
चेद्दासजनोनिष्प्रयोजन इत्यञ्जलिमवतंसतामनैषीत्।
अवादिषञ्च ताम् अयि मुग्धे कः सचेतनः स्त्रियम-
भिकामयमानां नाभिनन्दति। यदि मदनुग्रहनिश्च-
लस्त्वाभिसन्धिः आचरा विचारं मदुपदिष्टम्। आ-
दर्शय राज्ञे मत्साहृश्यगर्भं चित्रपटम् आचक्ष्व च
किमियमाकृतिः पुरुषसौन्दर्य्यस्य परमारूढ़ा न
वेति। वाढ़मारूढ़ेति नूनमसौ वक्ष्यति। ब्रूहि
भयो यद्येवम् अस्ति कापि तापसी देशान्तरभ्रमण

लब्धप्रागल्भ्या मम च मातृभूता तयेदमालेख्यरूपं पुरस्कृत्याहमुक्ता "सोऽस्ति तादृङ्मन्त्रो येन त्वमुपोषिता पर्व्वणि विविक्तायां भूमौ पुरोहितैर्हुतमुक्ते सप्तार्च्चिषि नक्तमेकाकिनी शतं चन्दनसमिधः शतमगुरुसमिधः कर्पूरमुष्टीः पट्टवस्त्राणि च प्रभूतानि हुत्वा भविष्यस्येवमाकृतिः । अथ चालयिष्यसि घण्टां घण्टा पुटक्कणिताहूतश्च भर्त्ता भवत्यै सर्व्वं रहस्यजातमाख्याय निमीलिताक्षो यदि त्वामालिङ्गेत् इयमाकृतिरमुमुपसंक्रामेत् त्वन्तु भविष्यसि यथा पुराकारैव यदि भवत्यै भवत्प्रियाय च एवं रोचेत । नचास्मिन्विधौ विसंवादः शङ्क्य इति" वपुश्चेदिदं तवाभिमतं सह सुहृन्मन्त्रिभिरनुजैः पौरजानपदैश्च संमन्त्र्य तेषामप्यनुमते कर्मण्यभिमुखेन स्थेयमिति । स नियतमभ्युपैष्यति पुनरस्यामेव प्रमदवनवाटी श्टङ्गाटिकायामाथर्वणिकेन विधिना संज्ञपितपशुनाभिहुत्यमुक्ते हिरण्यरेतसि तद्धूमशमनेन संप्रविष्टेन मया अस्मिन्नेव लतामण्डपे स्थातव्यं त्वं पुनः प्रगाढ़ायां प्रदोषवेलायामालपिष्यसि कर्णे मत कृतकनर्मस्मिता विकटवर्माणं धूर्त्तोऽसि त्वमहतत्त्वश्च मदनुग्रहलब्धेनापि रूपेण लोकलोचनोत्सवायमानेन मत्सपत्नीरभिरमयिष्यसि । नाहमात्मविनाशाय वेतालोत्थापनमाचरेयमिति । श्रुत्वेदं

त्वद्वचः स यद्वदिष्यति तन्मह्यमेकाकिन्युपागत्य निवेदयिष्यसि ततः परमहमेव ज्ञास्यामि मत्पदचिह्नानि चोपवने पुष्करिकया प्रमार्जयेति। सा तथेति शास्त्रोपदेशमिव मदुक्तमाहृत्य दृष्टसुरतरागेव कथं कथमप्यगादन्तःपुरम्। अहमपि यथाप्रवेशं निर्गत्य स्वमेवावास मयासिषम्।

अथ सा मत्तकाशिनी तथा तमर्थमन्वतिष्ठत्। अतिष्ठच्च तन्मते स दुर्मतिः। अभ्रमच्च पौरजानपदेष्वियमद्भुतायमाना वार्त्ता "राजा किल विकटवर्मा देवीमन्त्रबलेन देवयोग्यं वपुरासादयिष्यति। नूनमेष न विप्रलम्भोऽतिकल्याणः कैव कथा प्रमादस्य स्वस्मिन्नेवान्तःपुरोपवने स्वाग्रमहिष्यैव सम्पाद्यः किलायमर्थः। तथाहि दृहस्पति प्रतिमबुद्धिभि र्मन्त्रिभिरप्यभ्यूह्यानुमतः। यद्येवं भावि मान्यदतः परमस्ति किञ्चिदद्भुतम् अचिन्त्यो हि मणिमन्त्रौषधीनां प्रभावइति" प्रसृततदेषु लोकवादेषु प्राप्ते पर्व्वदिवसे प्रागाढ़ायां प्रौढतमसि प्रदोषवेलायामन्तःपुरोद्यानादुदैरत धूर्जटिकण्ठधूम्रो धूपोद्गमः चीराज्यदधितिलगौरसर्षपवसामांसरुधिराहुतीनाञ्च परिमलः पवनानुसारी च दिशि दिशि प्रावासीत्।

प्रशान्ते च सहसा धूमोद्गमे तस्मिन्नहमविश

निशान्तोद्यानमागमच्च गजगामिनी। आलिङ्ग्य च मां सस्मितं समभ्यधत्त धूर्त्त सिद्धं ते समीहितम् अवसितश्च पशुरसौ। अमुष्य चोपप्रलोभनाय त्वदादिष्टया दिशा मयोक्तं कितव न साधयामि ते सौन्दर्य्यम् एवं सुन्दरोऽपि त्वमप्सरसामपि स्पृहणीयो भविष्यसि किमुत मानुषीणां मधुकरइव निसर्गचापलात् यत्र क्वचिदासज्जति भवादृशो नृशंस इति। तेन तु मे पादयोर्निपत्याभिहितं रम्भोरु सहस्व मत्कृतानि दुश्चरितानि मनसापि न चिन्तयेयमितः परमितरनारीः त्वरस्व प्रकृते कर्म्मणीति। तदहमीदृशेन वैवाहिकेन नेपथ्येन त्वामभिसृतवती। प्रागपि रागाग्निसाक्षिकमनङ्गेन गुरुणा दत्तैव तुभ्यमेषा जाया पुनरपीमं जातवेदसं साक्षीकृत्य स्वहृदयेन दत्तेति। प्रपदेन चरणपृष्ठे निष्पीड्योत्क्षिप्तपादपार्ष्णिः इतरेतरव्यतिषक्तकोमलाङ्गुलि दलेन भुजलताद्वयेन कन्धरां समावेष्ट्य सलीलमाननमानमय्य स्वयमुन्नमितमुखकमला विभ्रान्तविशालदृष्टिरसकृदभ्यचुम्बत्।

अथैनाम् इहैव कुरण्टगुल्मगर्भे तिष्ठ यावदहं निर्गत्य साधयेयं साध्यं सम्यगिति विसृज्य तामुपसृत्य होमानलप्रदेशमशोकशाखावलम्बिनीं घण्टामचालयम्। अकूजच्च सा तं जनं कृतान्तदूती-

वाहयन्ती। प्रावर्त्तिषि चाहमगुरुचन्दनप्रमुखानि होतुम् आयासीच्च राजा यथोक्तं देशम्। शङ्का-पन्नमिव किञ्चित्सविस्मयं विचार्य्य तिष्ठन्त मब्रुवं ब्रूहि सत्यं भूयोपि मे भगवन्तं चित्रभानुमेव साक्षीकृत्य नचेदनेन रूपेण मत्सपत्नीरभिरमयिष्यसि ततस्त्वयि इदं रूपं संक्रामयेयमिति। स तदैव देव्यैवेयं नोपधिरिति स्फुटोपजात संप्रत्ययः प्रावर्त्तत शप-थाय। स्मित्वा पुनर्मयोक्तं किं वा शपथेन कैव हि मानुषी मां परिभविष्यति यद्यप्सरोभिः सङ्गच्छसे सङ्गच्छस्व कामं कथय कानि ते रहस्यानि तत्कथ-नान्ते हि त्वत्स्वरूपभ्रंशइति। सोऽब्रवीत् अस्ति बद्धो मत्पितुः कनीयान् भ्राता प्रहारवर्मा तं वि-षान्नेन व्यापाद्याजीर्णदोषं ख्यापयेयमिति मन्त्रिभिः सहाध्यवसितम्। अनुजाय विशालवर्मणे दण्डचक्रं पुण्ड्राभियोगाय दित्सितम् पौरवृद्धश्च पाञ्चालिकः परित्रातश्च सार्थवाहः खनतिनाम्नोयवनाद्वज्रमेकं वसुन्धरामूल्यं लघीयसार्घेण लब्धमिति ममैकान्तेऽ-मन्त्रयताम्। गृहपतिश्च ममान्तरङ्गभूतो जन-पदमहत्तरः शतहलिरलीकवाद शीलमवलेपवन्तं दुष्टग्रामण्यमनन्तसीरं जनपदकोपेन घातयेयमिति दण्डधरानुद्वारकर्मणि मत्प्रयोगान्नियोक्तुमभ्युपाग-मत्। इत्यमिदमचिरप्रस्तुतं रहस्यम् इत्याकर्ण्य

तम् इयत्तवायुरुपपद्यस्व स्वकर्मोचितां गतिमिति छुरिकया द्विधाकृत्य कृत्तमात्रं तस्मिन्नेव प्रवृत्त स्फीतसर्पिषि हिरण्यरेतस्यजुहवम् अभूच्चासौ भस्मसात् । अथ स्त्रीस्वभावादीषद्विह्वलां हृदयवल्लभां समाश्वास्य हस्तकिसलयेऽवलम्ब्य गत्वा तद्गृहमनुज्ञयास्याः सर्वाण्यन्तःपुराणि आहूय सद्यएव सेवां दत्तवान् । विस्मितविलासिनीसार्थमध्ये कञ्चिद्विहृत्य कालं विसृष्टावरोधमण्डलस्तामेव संहतोरुमूरुपीड़मुरःपीड़ञ्चोपगूह्य तल्पे ऽभिरमयन्नल्पामिव तां निशामत्यनैषम् । अलभे च तन्मुखात्तद्राज कुलस्य शीलम् । उषसि स्नात्वा कृतमङ्गलो मन्त्रिभिः सह समगच्छे तांश्चाब्रुवम् आर्य्याः रूपेणैव सह परिवृत्तोमम स्वभावः । यएष विषान्नेन हन्तुं चिन्तितः पिता मे स मुक्त्वा स्वमेतद्राज्यं भूय एव ग्राहयितव्यः पितृवदमुष्मिन्वयं शुश्रूषयैव वर्त्तामहे नह्यस्ति पितृबधात्परं पातकमिति । भ्रातरञ्च विशालवर्म्माणमाहूयोक्तवान् वत्स न सुभिक्षाः साम्प्रतं पुण्ड्राः ते दुःखमोहोपहता स्त्यक्तात्मानो राष्ट्रं नः सुभिक्षमभिद्रवेयुः । अतो मुष्टिवधः सस्यवधोवा यदोत्पद्यते तदाभियास्यसि नाद्य यात्रा युक्तेति । नगरहट्टावप्यलापिषम् अल्पीयसा मूल्येन महार्हं वस्तु मास्तु मे लभ्यं धर्मरक्षायै तदनुगुणेनैव

मूल्येनाद्य: क्रीयतामिति। एतच्चलिङ्ग राष्ट्रमुख्य-
माह्वयाख्यातवान् योऽसावनन्तसीर: प्रहारवर्म्मण:
पक्षइति निनाशयिषित: सोपि पितरि मे प्रकृतिस्थे
किमिति नाश्येत तत्त्वयापि तस्मिन् संरम्भो न
कार्य्यइति।

तद्इमे सर्व्वमाभिचारनिकमुपलभ्य सएवायमिति
निश्चिन्वाना विस्मयमानाश्च मां महादेवीञ्च प्रशं-
सन्तोमन्त्रबलानि चोद्घोषयन्तो बन्धनात्पितरौ निष्-
क्रमय्य स्वं राज्यं प्रत्यपादयन्। अहञ्च तया मे
धात्र्या सर्व्वमिदं समाचेष्टितं रहसि पित्रोरवगमय्य
प्रहर्षकाष्ठाधि रूढयोस्तयो: पादमूलमभजे। अभज्ये
च यौवराज्यलक्ष्म्या तदनुज्ञा तया प्रसाधितात्मा
देवपादविरहदु:खदुर्भगान् भोगान्निर्व्विशन् भूयो-
ऽस्य पितृसखस्य सिंहवर्म्मणो लेख्याच्चण्डवर्म्मणस्वम्या-
भियोगमवगम्य प्रातुवधोमित्ररक्षा चोभयमपि कर-
णीयमेवेत्यलघुना लघु समुत्थानेन सैन्यचक्रेणाभ्य-
सरम् अभूवञ्च भूमिस्त्वत्पादलक्ष्मीसाक्षात् क्रिया-
महोत्सवानन्दराशेरिति।

श्रुत्वैतद्देवोराजवाहन: सस्मितमवादीत् पश्यत
पारतल्पिक मुपधियुक्तमपि गुरुजनबन्धव्यसनमुक्ति-
हेतुतया दुष्टामित्रप्रमापणाभ्युपायतया राज्योप-
लब्धिमूलतया च पुष्कलावर्धधर्मावप्यदीरधत्। किं

हि बुद्धिमद्भिः प्रयुक्तं नाभ्युपैति शोभाम् इत्यर्थपा-
लमुखे निधाय स्निग्धदीर्घां दृष्टिम् आचष्टां भवाना-
त्मीयचरितमित्यादिदेश ।

इतिश्रीदण्डिनः कृतौ दशकुमारचरिते उपहा-
रवर्म्मचरितं नाम तृतीय उच्छ्वासः ।

# अर्थपाल चरितन्नाम

चतुर्थ उच्छ्वासः ।

सोऽपि बद्धाञ्जलिरभिदधे देव सोऽहमप्येभिरेव सुहृद्भिरेककर्मा उर्मिमालिनेमिभूमिवलयं परिभ्रमन्नुपासरं कदाचित् काशिपुरीं वाराणसीम् उपसृय च मणिभङ्गनिर्मलाम्भसि मणिकर्णिकायाम् अविमुक्तेश्वरं भगवन्तमन्धकमथनमभिप्रणम्यप्रदक्षिणं परिभ्रमन् पुरुषमेकमायामवन्तमायसपरिघपीवराभ्यां भुजाभ्यामाबध्य मानपरिकरमनवरतरुदितोच्छूनताम्रदृष्टिमद्राक्षम् । अतर्कयञ्च कर्कशोऽयं पुरुषः कार्पण्यमिव वर्षति म्लानतारं चक्षुः आरम्भश्च साहसानुवादी नूनमसौ प्राणनिस्पृहः किमपि कृच्छ्रं प्रियजनव्यसन मूलं प्रपित्सते तत् पृच्छेयमेनम् अस्ति चेत् ममापि कोपि साहाय्यावकाशस्तमेन मभ्युपपद्यद्दति अपृच्छं भद्र सन्नाहोऽयं साहसमवगमयति नचेद्गोप्यमिच्छामि श्रोतुं शोकहेतु-

मति। स मां सबहुमानं निर्वर्ण्य को दोषः श्रूयतामिति क्वचित् करवीरतले मया सह निषण्णः कथामकार्षीत्।

महाभाग सोऽहमस्मि पूर्व्वेषु कामचरः पूर्णभद्रो नाम गृहपतिपुत्रः प्रयत्नसंवर्द्धितोपि पित्रा दैवच्छन्दानुवर्त्ती चौर्य्यवृत्तिरासम्। अथास्यां काशीपुर्य्यामर्य्यवदर्य्यस्य कस्यचित् गृहे चोरयित्वा रूपाभिग्राहितो बद्धः। बद्धे च मयि मत्तहस्ती मृत्युविजयो नाम हिंसाविहारी राजगोपुरोपरितलाधिरूढस्य पश्यतः कामपाल नाम्नः उत्तमामात्यस्य शासनाज्जनकण्ठरवद्विगुणितघण्टारवो मण्डलितहस्तकाण्डः समभ्यधावत्। अभिपत्य च मया निर्भयेन निर्भर्त्सितः परिणमन् दारुखण्डसुषिरानुप्रविष्टोभयभुजदण्डचण्डघटित प्रतिमानो भीतवत्प्रवर्त्तिष्ट। भूयश्च नेता जातसंरम्भेण निकाम दारुणैर्वागङ्कुशपादपातैरभिमुखीकृतः मयापि द्विगुणाबद्धमन्युना निर्भर्त्स्याभिहतो निवृत्यापाद्रवत्। अथ मया निपत्य सरभसमाक्रुष्टो रुष्टश्च यन्ता हन्त हतोऽसि क्वयासि कुञ्जरापसदेति निशितेन वारणेन वारणं मुहुर्मुहुरभिघ्नन् निर्याणभागे कथमपि मदभिमुखमकरोत्। अथावोचम् अपसरतु रद्विदकीटएषः अन्यः कश्चिन्मातङ्गपतिरानीयतां

येनाहं सुहृत्तं विहत्य गच्छामि गन्तव्यां गतिमिति। दृष्ट्वैव स मां दृष्टमुद्गर्जन्तमुत्क्रान्तनियन्तृनिष्ठुराङ्गः पलायिष्ट । मन्त्रिणा पुनरहमाहूयाभ्यधायिषि भद्र मृत्युरेवैष मृत्युविजयो नाम हिंसाविहारी सोऽयमपि तावत्त्वयैवम्भूतः कृतः तद्विरम कर्मणोऽस्मान्मलीमसात् किमलमसि प्रपद्यास्मानार्य्यवृत्त्या वर्त्तितुमिति । यया [ज्ञापितोऽस्मीति] विज्ञापितोऽयं मया मित्रवन्मय्यवर्त्तिष्ट । पृष्टश्च मयैकदा रहसि जातविस्रम्भेणाभाषत स्वचरितम् ।

आसीत् कुसुमपुरे राज्ञोरिपुञ्जयस्य मन्त्री धर्म्मपालो नाम विश्रुतधीः श्रुतर्षिः अमुष्य पुत्रः सुमित्रोनाम पित्रैव समः प्रज्ञागुणेषु तस्यास्मि द्वैमातुरः कनीयान् भ्राताहम्। वेशेषु विलसन्तं मामसौ विनयरुचिरवारयत् । अवार्य्यदुर्न्नयस्याहमपसृत्य दिङ्मुखेषु भ्रमन् यदृच्छयास्यां वाराणस्यां प्रमदवने मदनाराधनाय निर्गत्य सह सखीभिः कन्दुकेनानुक्रीड़मानां काशीभर्त्तुश्चण्डसिंहस्य कन्यां कान्तिमतीं नाम चकमे कथमपि समगच्छे च। अथ कन्नञ्च विहरता कुमारीपुरे सा मयासीदापन्नसत्वा

---

[ज्ञापयति तथेवीति पाठः । ]

कश्चित्सुतञ्च सूतवती। मृतजात इति सोऽपविद्धो रहस्यनिर्भेदभयात्परित्यजनेन क्रीडाशैले शवर्य्या च श्मशानं नीतः। तयैव निवर्त्तमानया निशीथे राजवीथ्यामारक्षिक पुरुषैरभिगृह्य तर्जितया दण्डपारुष्यभीतया निर्भिन्नं रहस्यम्। राजाज्ञया निशीथे अहमाक्रीड़गिरिदरीगृहे विस्रब्धप्रसुप्तस्तयोपदर्शितो यथोपपन्नरज्जुबद्धः श्मशानमुपनीय मातङ्गोद्यतेन कृपाणेन प्राजिहीर्ष्ये। नियतिबलाल्लूनबन्धनस्तमसिमाच्छिद्यान्त्यजं तम् अन्यांश्च कांश्चित्प्रहृत्यापासरम्। अशरणश्च भ्रमन्नटव्याम् एकदोदश्रुमुख्या कयापि दिव्याकारया सपरिचारया कन्ययोपास्थायिषि। सा मामञ्जलिकिसलयोत्तंसितेन मुखविलोलकुन्तलेन मूर्ध्ना प्रणम्य मया सह वनवटद्रुमस्य कस्यापि महतः प्रच्छायशीतले तले निषण्णा कासि वासु कुतोऽस्यागता कस्य हेतोरस्य मे प्रसीदसीति साभिलाषमाभाषिता मया वाङ्मयं मधुवर्षमवर्षत्।

आर्य्य नाथस्य यक्षाणां माणिभद्रस्यास्मि दुहिता तारावली नाम। साहं कदाचिदगस्त्यपत्नीं लोपामुद्रां नमस्कृत्यापावर्त्तमाना मलयगिरेः परेतावासे वाराणस्याः कमपि दारकं रुदन्तमद्राक्षम्। आदाय चैनं तीव्रस्नेहान्मम पितोः सन्निधिमनैषम्

अनैषीच्च मे तातो देवस्यालकेश्वरस्यास्थानीम्। अथा-
हमाह्वयाजन्मा हरसखेन बाले बालेऽस्मिन् कीदृ-
शस्ते भाव इति औरसइवास्मिन् वत्से वत्सलतेति
मया विज्ञापितः सत्यमाह वराकीति तन्मूलामति-
महतीं कथामकरोत्। तत्रैतावन्मयावगतं त्वं किल
शौनकः शूद्रकः कामपालश्चाभिन्नः। बन्धुमती
विनयवती कान्तिमतीचाभिन्ना। वेदिमती यज्ञ-
दासी सोमदेवी चैकैव। हंसावली शूरसेना सुलो-
चना चानन्या। नन्दिनी रङ्गपताका इन्द्रसेना
चाद्ययभूता।या किल शौनकावस्थायामग्निसाच्च-
कमात्मसात्कृता गोपकन्या सैव किलार्य्यदासी पुन-
स्त्वाद्य तारावलीत्यभूवम्। बालश्च किल शूद्रकावस्थे
त्वयि आर्य्यदासवस्थायां मय्युदभूत्। अवर्द्धत च
विनयवत्या स्नेहवासनया स तु तस्यां कान्तिमत्यव-
स्थायामद्योदभूत्। एवमनेकस्मात्सुखपरिभ्रष्टं दैवा-
न्नयोपलब्धं तमेकपिङ्गादेशात् वने तपस्यतो राज-
हंसस्य देव्यै वसुमत्यै तत्सुतस्य भाविचक्रवर्त्तिनो
राजवाहनस्य परिचर्य्यार्थं समर्प्य गुरुभिरभ्यनुज्ञाता
कृतान्तयोगात् कृतान्तमुखपरिभ्रष्टस्य ते पादपद्म-
शुश्रूषार्थमागतास्मीति।

श्रुत्वा तामनेकजन्मरमणीमसकृदाश्लिष्य हर्षो-
त्सुमुखो मुहुर्मुहुः सान्त्वयित्वा तत्प्रभावदर्शिते

महति मन्दिरे अहर्निशं [ भूमि ] दुर्लभान् भोगानन्वभूवम् । द्वित्राणि दिनान्यतिक्रम्य मत्तकाशिनीं तामवादिषं प्रिये प्रत्यपकृत्य मत्प्राणद्रोहिणश्चण्डसिंहस्य वैरनिर्यातनसुखमनुबुभूषामीति । तया सस्मितमभिहितम् एहि कान्त कान्तिमतीदर्शनाय नयामि त्वामिति स्थितेऽर्द्धरात्रे राज्ञोवासगृहमनीये । ततस्तच्छिरोभागवर्त्तिनीमादायासियष्टिं प्रबोध्यैनं प्रस्फुरन्तमब्रुवम् अहमस्मि भवज्जामाताभवदनुमत्या विना तव कन्याभिमर्षी तमपराधमनुवृत्त्या प्रसादं मागतइति । सोऽतिभीतो मामभिप्रणम्याह अहमेव मूढ़ोऽपराद्धो यस्तव दुहितृसंसर्गानुग्राहिणो ग्रहग्रस्तइवोत्क्रान्तसीमा समादिष्टवान् बधम् । तदास्तां कान्तिमती राज्यमिदं मम च जीवितमप्यद्यप्रभृति त्वदधीनमित्यवादीत् । अथापरेद्युः प्रकृतिमण्डलं सन्निधाप्य विधिवदात्मजायाः पाणिमग्राहयत् । अश्रावयञ्च तनयवार्त्तां तारावली कान्तिमत्यै सोमदेवीसुलोचनेन्द्रसेनाभ्यश्च पूर्व्वजातिवृत्तान्तम् । इत्थमहं मन्त्रिपदापदेशं यौवराज्यमनुभवन् विहरामि विलासिनीभिरिति ।

सएवं मादृशेऽपि जन्तौ परिचर्य्यानुबन्धी बन्धु-

---

[इन्द्रेति क्वचित्पाठः ]

रेक: सर्व्वभूतानामलसकेन स्वर्गते श्वशुरे ज्यायसि च श्याले चण्डघोषनाम्नि स्त्रीष्वतिप्रसङ्गात्प्रागेव चयचीणायुषि पञ्चवर्षदेशीयं सिंहघोषनामानं कुमारमभ्यषेचयत्। अवर्धयच्च विधिनैनं स साधुः। तस्याद्य यौवनोन्मादिन: पैशुन्यवादिनो दुर्म्मन्त्रिण: कतिचिदासन्नन्तरङ्गभूता: तै: किलासावित्यमग्राह्यत "प्रसह्यैव स्वसा तवामुना भुजङ्गेन संगृहीता पुन: प्रसुप्ते राजनि प्रहर्त्तुमुद्यतासिरासीत् तेनास्मै तत्चण प्रबुद्धेन भीत्यानुनीय दत्ता कन्या। तच्च देवज्येष्ठं चण्डघोषं विषेण हत्वा बालोऽयमसमर्थइति त्वमद्यापि प्रकृतिविस्रम्भणायोपेचित:। चिणोति च पुरा स कृतघ्नो भवन्तम्। तमेवान्तकपुरं गमयितुं यतस्वेति"। स तथा दूषितोऽपि यच्चिणीप्रभावान्नामुष्मिन् पापमाचरितुमशकत्। एषु किल दिवसेष्वाययापूर्व्वमाकृतौ कान्तिमत्याः समुपलभ्य राजमहिषी सुलचणा नाम सप्रणयमपृच्छत्। देवि नाहमा यथातथ्येन विप्रलम्भनीया कथय तथ्यं केनेदमाययापूर्व्वमाननारविन्दे तवैषु वासरेष्विति। सा त्ववादीत् भट्टे स्मरसि किम् अद्यापि आययातथ्येन किञ्चिन्मयोक्तपूर्व्वम्। सखी मे तारावली सपत्नी च किमपि कलुषिताशया रहसि भर्त्तीमङ्गोत्तापदिष्टा प्रणयमप्युरुच्य प्रणाम्यमानाप्यषाभि-

रूपोढ़मत्सरा प्रावसत् अवसीदति च नः पतिः अतो मे दौर्म्मनस्यमिति। तत्प्रायेणैकान्ते सुलक्षणया कान्ताय कथितम्। अथासौ निर्भयोऽद्य प्रियतमाविरहपाण्डुभिरवयवैर्व्यस्तम्भितास्रुपर्य्याकुलेन चक्षुषा उष्णश्वासशोषिताभिरिव नातिपेशलाभिर्वाग्भिर्वियोगं दर्शयन्तं कथमपि राजकुले कार्य्याणि कारयन्तं पूर्व्वसङ्केतितैः पुरुषैरभिग्राह्याबन्धयत्। तस्य किल स्थानस्थानेषु दोषानुद्घोष्य तयोद्धरणीये चक्षुषी यथा तन्मूलमेवास्य मरणं भवेदिति। अतोऽत्रैकान्ते यथेष्टमस्रु मुक्त्वा तस्य साधोः पुरः प्राणान्मोक्तुकामो बध्नामि परिकरमिति।

मयापि तत् पितृव्यसनमाकर्ण्य पर्य्यस्रुणा सोऽभिहितः सौम्य किं तव गोपायित्वा यस्तस्य सुतो यक्षकन्यया देवस्य राजवाहनस्य पादशुश्रूषार्थं देव्या वसुमत्या हस्ते न्यासः कृतः सोहमस्मि शक्ष्यामि सहस्रमपि सुभटानामुदायुधानां हत्वा पितरं मोचयितुम् अपि तु सङ्कुले यदि कश्चित्पातयेत्तदङ्गयष्टिकां सर्व्वएव मे यत्नो भस्मनि हुतमिव भवेदिति।

अनवसितवचनएव मयि महानाशीविषः प्राकाररन्ध्रेणोदैरयच्छिरः। तमहं मन्त्रौषधबले-

नाभिगच्छ पूर्णभद्रमब्रुवं भद्र सिद्धं नः समीहितम्
अनेन तातमलक्ष्यमाणः सङ्कुले यदृच्छया पातितेन
नाम दंशयित्वा तथा विषं स्तम्भयेयं यथा मृतइत्यु-
दास्येत।त्वया तु मुक्तसाध्वसेन माता मे बोधयित-
व्या यो यस्या वने देव्या वसुमत्या हस्तार्पितो युष्म-
त्सूनुः सोऽनुप्राप्तः पितुरवस्थां मत्तउपलभ्य बुद्धि-
बलादित्थमाचरिष्यति। त्वया तु मुक्तत्रासया राज्ञे
प्रेषणीयम् एष खलु चत्रधर्मः यद्बन्धुरबन्धुर्वा दुष्टः
स निरपेक्षं निग्राह्यइति। स्त्रीधर्म्मश्चैषः यददुष्टस्य
दुष्टस्य वा भर्त्तुर्गतिर्गन्तव्येति। तदहममुनैव सह
चिताग्निमारोक्ष्यामि अभिजनानुरूपः पश्चिमोवि-
धिरनुज्ञातव्यइति। सएवं निवेदितो नियतमनुज्ञा-
स्यति। ततः स्वमेवागारमानीय काण्डपटपरि-
क्षिप्ते विविक्तोद्देशे दर्भसंस्तरमधिशाय्य स्वयं कृता-
नुमरणमण्डनया त्वया च तत्र सन्निधेयम्। अहञ्च
वाह्यकक्षा गतस्त्वया प्रवेशयिष्ये। ततः पितर-
मुज्जीव्य तदभिरचितेनाभ्युपायेन चेष्टिष्यामइति।

स तथेति हृष्टतरस्तूर्णमगमत्। अहन्तु घोष-
णास्थाने चिञ्चावृक्षं घनतरविपुलशाखमारुह्य गूढ-
तनुरतिष्ठम्। आरूढञ्च लोको यथायथमुच्चैः स्था-
नानि उच्चावचमलापाः प्रस्तुताः। तावन्मे पितरं
तस्करमिव पश्चाद्बद्धभुजमुद्धुरध्वनिमहाजना-

नुयातमानीय महभ्यास एव स्थापयित्वा मातङ्ग स्तिरघोषयत्। "एष मन्त्री कामपालो राज्य लोभात् भर्त्तारं चण्डसिंहं युवराजं चण्डघोषञ्च विषान्नेनोपांशु हत्वा पुनर्द्देवोपि सिंहघोषः पूर्ण-यौवनइत्यमुष्मिन् पापमाचरिष्यन्विश्वासाद्रहस्य-भूमौ पुनरमात्यं शिवनागमाहूय स्थूणमङ्गारवर्षञ्च राजबधायोपजप्य तैः स्वामिभक्त्या विवृतगुह्यः रा-ज्यकामुकस्यास्य ब्राह्मणस्यान्धतमसप्रवेशो न्याय्य इति प्राड्विवाकवाक्यादक्षुरुद्धरणाय नीयते। पुनरन्योपि यदि स्यादन्यायवृत्तिस्तमप्येवमेव यथार्हेण दण्डेन योजयिष्यति देवइति"। श्रुत्वैतद्वइकलकले महाजने पितुरङ्के प्रदीप्तशिरसमाशीविषं व्यक्षिपम्। अहञ्च भीतो नामावप्लुत्य तत्रैव जनानुलीनः क्रुद्ध-व्यालदष्टस्य तातस्य विहितजीवरक्षो विषं क्षणा-दस्तम्भयम्। अपतच्च स भूमौ मृतकल्पः प्रालपच्च सत्यमिदं राजावमानिनं दैवोदण्डएव स्पृशतीति यदयमक्षिभ्यां विना अवनिपतिना चिकीर्षितः प्राणैरेव वियोजितोविधिनेति। महत्ताश्च केचि-दन्वमन्यन्त अपरे पुनर्निनिन्दुः। दर्वीकरस्तु तमपि चण्डालं दृष्ट्वा त्रासद्रुतलोकदत्तमार्गः प्राद्रवत्।

अथ मदम्बा पूर्णभद्रबोधितार्था तादृशेऽपि व्यसने-नातिविह्वला कुलपरिजनानुयाता मद्भ्यासेव धीर-

मागत्य मत्पितुरुत्तमाङ्गम् उत्सङ्गेन धारयन्ती स्थिता राज्ञे समादिशत् एष मे पति स्तवापकर्त्ता नवेति दैवमेव जानाति न मेऽनयास्ति चिन्तया फलम्। अस्य तु पाणिग्राहकस्य गतिमननुप्रपद्यमाना भवत्कुलं कलङ्कयेयम् अतोऽनुमन्तुमर्हसि भर्त्रा सह चिताधिरोहणाय मामिति। श्रुत्वा चैतत् प्रतीयुक्तः प्रतिसमादिचत् चितीश्वरः क्रियतां कुलोचितः संस्कारःउत्सवोत्तरञ्च पाश्चमं विधिसंस्कारमनुभवतु मे भगिनीपतिरिति। चण्डाले तु मत्प्रतिषिद्धसकलमन्त्रवादिप्रयासे संस्थिते कामपालोपि कालदष्टएवेति स्वभवनोपनयनमस्मुष्य स्वमाहात्म्यप्रकाशनाय महीपतिरन्वमंस्त। आनीतश्च पिता मे विविक्तायां भूमौ दर्भशय्यामधिशय्य स्थितोऽभूत्। अथ मदम्बा मरणमण्डनमनुष्ठाय सकरुणं सखीरामन्त्र मुहुरभिप्रणम्य भवनदेवताः यत्ननिवारितपरिजनाक्रन्दिता पितुर्म्मे शयनस्थानमेकाकिनी प्राविचत्। तत्र च पूर्व्वमेव पूर्णभद्रोपस्थापितेन च मया वैनतेयतां गतेन निर्विषीकृतं भर्त्तारमैचत। हृष्टतमा पत्युः पादयोः पर्य्यश्रुमुखी प्रणिपत्य माञ्च मुहुर्मुहुः प्रस्नुतस्तनी परिष्वज्य सहर्षवाष्पगद्गदमगदत्। पुत्र मयास्मि जातमात्रः पापया परित्यक्तः स किमर्थमेवं मामतिनिघृणा-

मनुगृह्णासि। अथवैष निरपराधएव ते जनयिता युक्तमस्य प्रत्यानयनमन्तकाननात्। क्रूरा खलु तारावली या त्वामुपलभ्यापि तत्त्वतः कुवेरादस्मर्थ्य मह्यमर्पितवती देव्यैवसुमत्यै। सैव वा सदृश-कारिणी नहि तादृशाद्भाग्यराशेर्विना मादृशोजनोऽल्पपुण्य स्तवार्हति कलप्रलापामृतानि कर्णाभ्यां पातुम्। एहि परिष्वजस्वेति भूयोभूयः शिरसि जिघ्रन्ती अङ्कमारोपयन्ती तारावलीं गर्हयन्ती आलिङ्गयन्ती अश्रुभिरभिषिञ्चन्ती च उत्कम्पिताङ्गयष्टिरन्यादृशीव क्षणमजनिष्ट। जनयितापि मे नरकादिव स्वर्गं तादृशाद्व्यसनात्तथा भूतमभ्युदयमारूढः पूर्णभद्रेण च विस्तरेण यथावृत्तान्तमावेदितो भगवतोमघवतोपि भाग्यवन्तमात्मानमजीगणत्। मनागिव च मत्सम्बन्धमाख्याय हर्षविस्मितात्मनोः पित्रोरमयम् आज्ञापयत कावा नः प्रतिपत्तिरिति। पिता मे प्राब्रवीत् वत्स गृहमेवेदमस्मदीयमतिविशालशालवलयमक्षय्यायुधग्रामम् अलङ्घ्यतमा च गुप्तिः उपकृताश्च मयातिबहवः सन्ति सामन्ताः प्रकृतयश्च भूयस्यो न मे व्यसनमनुरुध्यन्ते सुभटानाञ्चानेकसहस्रमस्त्येव ससुहृत्सुतदारम्। अतोऽत्रैव कतिपयान्यहानि स्थित्वा वाह्याभ्यन्तरकोपानुत्पादयिष्यामः। कुपितांश्चोपसंगृह्य

प्रोत्साह्यास्य प्रकृत्यमित्रान् उत्थाप्य सहजांश्च द्विषो दुर्दान्तमेनमुच्छेत्स्याम इति । कोदोव त्वयाख्यिति तातस्य मतमन्वमंस्ति ।

तथास्मासु प्रतिविधाय तिष्ठत्सु राजापि विज्ञापितोदन्तो जातानुतापः पारग्रामिकान् प्रयोगान् प्रायः प्रायुंक्त ; ते चास्माभिः प्रत्यहं मह्यन्त । अस्मिन्नेवावसरे पूर्णभद्रमुखाच्च राज्ञः शय्यासनस्थानमवगम्य तदैव स्वोदवसितभित्तिकोणादारभ्य उरगास्येन सुरङ्गामकार्षम् । गता च सा भूमिस्वर्गकल्पमनल्पकन्याकाजनं कमप्युद्देशम् । अव्यथिष्ट च दृष्ट्वैव सा मां नारीजनः । [ तत्र काचिदिन्दुलेखेव स्वलावण्येन रसातलान्धकारं निह्नुवाना भूमिरिव विग्रहिणी ] भगवतः कुसुमधन्वनो राजलक्ष्मीरिवानेककुट्टपतिदर्शनपरिहाराय महीविवरं प्रविष्टा निष्टप्तकनकपुत्रिकेवावदातकान्तिः कन्यका चन्दनलतेव मलयमारुतेन मद्दर्शनेनोदकम्पत । तथाभूते च तस्मिन्नङ्गनासमाजे कुसुमि-

---

[ तत्र काचिदिन्दुलेखेव रसातलान्धकारमात्मलावण्येन निह्नुवाना विग्रहिणीव देवी विश्वम्भरा हरम्हिणीत्रासुरविजयायाटवतीर्णा पातालमागता इति पाठान्तरम् । ]

नैव काययष्टिः पाण्डुशिरसिजा स्थविरा काचिच्चरणयोर्मे निपत्य त्रासदीनमब्रूत दीयतामभयदानमस्मै अनन्यशरणाय स्त्रीजनाय किमसि देवकुमारो दनुजयुद्धतृष्णया रसातलं विविक्षुः आज्ञापय कोऽसि कस्य हेतोरागतोऽसीति । सा तु मया प्रत्यवादि मास्म भवत्यो भैषुः । अहमस्मि द्विजातिवृषभात्कामपालाद्देव्यां कान्तिमत्यामुत्पन्नोऽर्थपालो नाम सत्यर्थे निजगृहान्नृपगृहं सुरङ्गयोपसरन्निहान्तरे वो दृष्टवान् कथयत काः स्थ यूयं कथमिह निवसथेति ।

सोदञ्जलिरुदीरितवती भर्तृदारक भाग्यवत्यो वयं यास्त्वामेभिरेव चक्षुर्भिरनघमद्राक्ष्म । श्रूयतां यस्तव मातामहश्चण्डसिंहः तेनास्यां देव्यां लीलावत्यां चण्डघोषः कान्तिमतीत्यपत्यद्वयमुदपादि । चण्डघोषस्तु युवराजोऽत्यासङ्गादङ्गनासु राजयक्ष्मणा सुरक्षयमगात् अन्तर्वत्न्यां देव्यामाचारवत्याम् । अमुया चेयं मणिकर्णिका नाम कन्या प्रसूता । अथ प्रसववेदनया मुक्तजीविताचारवती पत्युरन्तिकमगमत् । अथ देवश्चण्डसिंहो मामाहूयोपह्वरे समाज्ञापयत् ऋद्धिमति कन्यकेयं कल्याणलक्षणा तामिमां मालवेन्द्रनन्दनाय दर्पसाराय विधिवत् वर्द्धयित्वा दित्सामि बिभेमि च कान्तिमतीवृत्तान्तादारभ्य कन्या

कानां प्रकाशावस्थापनात् अतइयमरातिव्यसनाय कारिते महति भूमिगृहे कृत्रिमशैलगर्भोत्कीर्णानामण्डपप्रेक्षागृहे प्रचुरपरिवर्हया भवत्या संवर्द्धताम् अस्त्यत्र भोग्यवस्तु वर्षशतेनाप्यक्षय्यमिति। स तथोक्त्वा निजवासगृहस्याङ्गनभित्तावर्द्धपादं किष्कुविष्कम्भमुद्धृत्य तेनैव द्वारेण स्थानमिदमस्मानवीविशत्। इह च नो वसन्तीनां द्वादश समाः समत्ययुः। इयञ्च वत्सा तरुणीभूता न चाद्यापि स्मरति राजा काममियं पितामहेन दर्पसाराय सङ्कल्पिता त्वदम्बया कान्तिमत्या चेयं गर्भस्थैव द्यूतजिता स्वमात्रा तत्रैव जायात्वेन समकल्प्यत तदत्र प्राप्तरूपं चिन्त्यतां कुमारेणैवेति। तां पुनरवोचम् अद्यैव राजगृहे किमपि कार्य्यं साधयित्वा प्रतिनिवृत्तो युष्मासु यथार्हं प्रतिपत्स्ये इति। तेनैव दीपदर्शितविलपथेन गत्वा स्थितेऽर्द्धरात्रे तदर्द्धपादं प्रत्युद्धृत्य वारुगृहं प्रविष्टो विश्रब्धसुप्तं सिंहघोषं जीवग्राहमग्रहीषम् आकृष्य च तमहिमिवाहिशत्रुः स्फुरन्तममुनैव भित्तिरन्ध्रपथेन स्वैणासन्निधिमनैषम्। आनीय च स्वभवनम् आयसनिगड़सन्दानितचरणयुगलमननमितमलिनवदनमश्रुबहलरक्तचक्षुषमेकान्ते जनयित्वो र्ममादर्शयम्। अकथयञ्च विलकथाम्।

अथ पितरौ प्रहृष्टतरौ तं निकृष्टाशयं निशाम्य बन्धने नियम्य तस्या दारिकायाः यथार्हेण कर्मणा मां पाणिमग्राहयेताम्। अनाथकञ्च तद्राज्यमस्मदायत्तमेव जातं प्रकृतिकोपभयात्तु मन्माता मुमुचितोऽपि न मुक्तएव सिंहघोषः। तथास्थिताश्च वयम् अङ्गराजः सिंहवर्म्मा देवपादानां भक्तिमान् कृतवर्म्मा चेति श्रमिताभियुक्तमेनमभ्यसराम अभूवञ्च भवत्पादपङ्कजरजोऽनुग्राह्याः। स चेदानीं भवच्चरणप्रणामप्रायश्चित्तमनुतिष्ठतु सर्व्वदुश्चरितक्षालनमनार्य्यः सिंहघोष इति अर्थपालः प्राञ्जलिः प्रणनाम।

देवोऽपि राजवाहनो बहु मराक्रान्तं बहुपयुक्ता स बुद्धि र्मुक्त बन्धस्ते श्वशुरः पश्यतु मामित्यभिधाय भूयः प्रमतिमेव पश्यन् प्रीति स्मेरः प्रस्तूयतां तावदात्मीयं चरितमित्याज्ञापयत्।

इति दण्डिनः कृतौ दशकुमारचरिते अर्थपालचरितं नाम चतुर्थ उच्छ्वासः।

# प्रमतिचरितन्नाम

---

## पञ्चम उच्छ्वासः ।

सोऽपि प्रणम्य विज्ञापयामास । देव देवस्यान्वेषणाय दिक्षु भ्रमन्नहमप्यस्यापि विन्ध्यपार्श्वरूढस्य वनस्पतेरधः परिणतपतङ्गबालपल्लवावतंसे पश्चिमदिगङ्गनामुखे पल्वलाम्भस्युपस्पृश्योपास्य सन्ध्यां तमःसमीकृतेषु निम्नोन्नतेषु गन्तुमक्षमः क्षमातले किसलयैरुपरचय्य शय्यां शिशयिषमाणः शिरसि कुर्वन्नञ्जलिं यस्मिन् वनस्पतौ वसति देवता सैव मे शरणमस्तु शरारुचक्रचारभीषणायां शर्वगलश्यामशार्वरान्धकारपूराध्मातगभीरगह्वरायामस्यां महाटव्यामेकाकिनो मे प्रसुप्तस्येत्युपधाय वामभुजमशयिषि। ततः क्षणादेवावनिदुर्लभेन स्पर्शेना सुखायिषत किमपि गात्राणि आह्लादयिषतेन्द्रियाणि अभ्यमनायिष्ट चान्तरात्मा विशेषतश्च हृषि-

तावत्तनूरुहैः पर्य्यस्फुरन्मे दक्षिणभुजः। कथञ्चिदमिति मन्दमन्दमुन्मिषन्नपर्य्यङ्के चन्द्रातपच्छेदकल्पं शुक्लांशुकवितानमैक्षिषि। वामतोवलितदृष्टिः सभया सौधभित्तिं चित्रास्तरणशायिनमतिविस्रब्धप्रसुप्तमङ्गनाजनमलक्षयम्। दक्षिणतोदत्तचक्षुरागलितस्तनांशुकाम् अमृतफेन पटलपाण्डुरशयनशायिनीम् आदिवराहदंष्ट्रांशुजाललग्नाम् अंसस्रस्तदुग्धसागरदुकूलोत्तरीयां भयसाध्वसमूर्च्छितामिव धरणीम् अरुणाधरमणिकिरणबालकिसलयलास्यहेतुभिराननारविन्दपरिमलोद्वाहिभिर्निश्वासमातरिश्वभिरीश्वरेक्षणदहनदग्धं स्फुलिङ्गशेषमनङ्गमिव सन्धुक्षयन्तीम् अन्तःसुप्तषट्पदमम्बुजमिव जातनिद्रामामीलितलोचनेन्दीवरमाननं दधानाम् ऐरावतमदात्रलेपलूनापविद्धामिव नन्दनवनकल्पद्रुमरत्नमञ्जरीं कामपि तरुणीमालोकयम्। अतर्कयञ्च क्व गता सा महाटवी कुतइदं मूर्द्धाण्डकपालसम्पुटोल्लेखि ध्वजशालिशिखरमूलोत्सेधं सौधमागतं क्व च तदरण्यस्थलीसमास्तीर्णं पल्लवशयनं कुतस्त्यञ्चेदमिन्दुगभस्तिसम्भारभासुरं हंसतूलदुकूल शयनम्। एष च को नु शीतरश्मिकिरणरजतरज्जुदोलापरिभ्रष्टमूर्च्छित इवाप्सरोगणः स्वैरसुप्तः सुन्दरीजनः का चेयं देवीवारविन्दहस्ता शारदशशाङ्कमण्डलामलदु-

कूलोत्तरच्छदमधिशेते शयनतलम्। न तावे-षा देवयोषा यतो मन्दमन्दमिन्दुकिरणैः संवाह्य-माना कमलिनीव निद्राति भग्नहन्तसुप्तरसविन्दु-शवलितं पाकपाण्डु चूतफलमिवोद्भिन्नस्वेदरेखं ग-ण्डस्थलमालक्ष्यते अभिनवयौवनविदाहनिर्भरोष्मणि कुचतटे वैवर्ण्यमुपैति वर्णकः वाससी च परिभोगा-नुरूपं धूसरिमाणमादर्शयतः तदेषा मानुष्येव दिष्ट्या चानुच्छिष्टयौवना यतः सौकुमार्य्यमागताः सन्तोपि संहताद्रवावयवाः प्रस्निग्धतमापि पाण्डुतानुविद्धै-व देहच्छवि दन्तपीडानभिज्ञतया नातिविशदरा-गो मुखे विद्रुमद्युतिरधरमणिः अनत्यापूर्णमारक्तमूलं चम्पकमुकुलमिव कठोरं कपोलतलम् अनङ्गवाणपा-तमुक्ताशङ्कञ्च विस्रब्धमधुरं सुप्यते नचैतद्वचःस्थलं निर्दयविमर्दविस्तारिमुखस्तनयुगलम् अस्ति चानति-क्रम्यशिष्टमर्य्यादचेतसो ममास्यामासक्तिः आरुक्त्यनु-रूपं पुनराश्लिष्टा यदि स्पष्टमार्त्तरवेणैव सह निद्रां मोक्ष्यति अथाहं न शक्ष्यामि चानुपाश्लिष्य शायि-तुम् अतो यद्भावि तद्भवतु भाग्यमत्र परीक्षिष्य इति स्पृष्टास्पृष्टमेव किमप्याविद्धरागसाध्वसं लघुस्सन् स्थितोऽस्मि। सापि किमप्युत्कम्पिना रोमोद्भेदवता वामपार्श्वेन सुखायमानेन मन्दंमन्दंविजृम्भिकारम्भ-मन्थराङ्गी त्वङ्गदग्रपक्ष्मणोश्चक्षुषोरलसतान्ततारकेण

नातिपक्वनिद्राकषायितापाङ्गपरभागेण युगलेनेष-दुन्मिषन्ती त्रासविस्मयहर्षरागशङ्काविलासविभ्रम-व्यवहितानि व्रीड़ान्तराणि कानि कान्यपि कामेना-ङ्गितानुभावेनावस्थान्तराणि कार्य्यमाणा परिजनप्र-बोधनोद्यतां गिरं कामावेशपरवशं हृदयमङ्गानि च साध्वसायाससम्बद्धमानस्वेदपुलकानि कथंकथमपि निगृह्य सस्पृहेण मधुरकूणितत्रिभागेण मन्दमन्द-प्रचारितेन चक्षुषा मदङ्गानि निर्वर्ण्य दूरोत्सर्पित-पूर्व्वकायापि तस्मिन्नेव शयनतले सचकितमशयिष्ट अजनिष्ट मे रागाविष्टचेतसोपि किमपि निद्रा। पुनरननुकूलस्पर्शदुःखायमानगात्रः प्राबुध्ये प्रबुद्धस्य च सैव मे महाटवी तदेव तरुतलं सएव पत्रास्तरो समभूत् विभावरी च व्ययासीत्। अभूच्च मे म-नसि किमयं स्वप्नः किं विप्रलम्भो वा किमियमासु-री दैवी वा कापि माया यद्भावि तद्भवतु नाहमिदं तत्त्वतो नावबुध्य मोक्ष्यामि भूमिशय्यां यावदायु-रत्रत्यायै देवतायै प्रतिशयिष्यामीतिनिश्चितमति-रतिष्ठम्।

अथाविर्भूय कापि रविकराभितप्तकुवलयदामता-न्तगात्रयष्टिः क्लिन्ननिवसनोत्तरीया निरलक्तकरू-क्षपाटलेन निःश्वासोष्मजर्ज्जरित त्विषा दन्तच्छदेन वमन्तीव कपिलधूमधूम्रं विरहानलम् अनवरत

सलिलधाराविसर्ज्जनाद्रुधिरावशेषमिव लोहिततरं द्वितयमक्ष्णोरुद्वहन्ती कुलचारित्रबन्धनपाशविभ्र-मेणैकवेणीभूतेन केशपाशेन नीलांशुकचीरचूलि-कापरिवृता पतिव्रतापताकेव सञ्चरन्ती क्षामक्षा-मापि देवतानुभावादनतिक्षीणवर्णावकाशा स्नेह-न्तिनी प्रणिपतन्तं मां प्रहर्षोत्कम्पितेन भुजलता-द्वयेनोत्थाप्य पुत्रवत्परिष्वज्य शिरस्युपाघ्राय वात्स-ल्यमिव स्तनयुगलेन स्तन्यच्छलात् प्रक्षरन्ती शिशि-रेणास्रुणा निरुद्धकण्ठी स्नेहगद्गदं व्याहार्षीत् वत्स यदि वः कथितवती मगधराजमहिषी वसुमती मम हस्ते बालमर्थपालं निधाय कथाञ्च काञ्चिदात्मभ-र्तृपुत्रसखीजनानुबद्धां राजराजप्रवर्त्तितां कृत्वा-न्तर्द्धानमगादात्मजा माणिभद्रस्येति साहमस्मि वो जननी पितुर्वो धर्म्मपालसूनोः सुमन्त्रानुजस्य का-मपालस्य पादमूलान्निष्कारणकोपक ुषिताशया प्रोष्यानुशयविधुरा स्वप्ने केनापि रक्षोरूपेणोपेत्य शप्तास्मि चण्डिकायां त्वयि-वर्षमात्रं वसामि प्रवास दुःखायेति ब्रुवतैवाहमाविष्टा प्राबुध्ये। गतश्च त-द्वर्षं वर्षसहस्रदीर्घम् अतीतायान्तु यामिन्यां देव-देवस्य त्र्यम्बकस्य श्रावस्त्यामुत्सव समाजमनुभूय बन्धुजनञ्च स्थानस्थानेभ्यः समापतितमभिसमीक्ष्य मुक्तशापा पत्युः पार्श्वमभिसरिष्यामीति प्रस्थिता-

यामेव मयि त्वमवताभ्युपेत्य प्रतिपन्नोऽसि शरणमि-
हत्यां देवतामिति प्रसुप्तोऽसि एवं शापदुःखाविष्टया
तु मया तदा न तत्त्वतः परिच्छिन्नोभावान् अपि तु
शरणागतमविरतप्रमादायामस्यां महाटव्यामयुक्तं
परित्यज्य गन्तुमिति मया त्वमपि स्वपन्नेवास्मि नीतः
प्रत्यासन्ने च तस्मिन् देवगृहे पुनरचिन्तयं कथमिह
तरुणेनानेन सह समाजं गमिष्यामीति। अथ
राज्ञः श्रावस्तीश्वरस्य यथार्थनाम्नो धर्म्मवर्द्धनस्य
कन्यां नवमालिकां घर्म्मकालसुभगे कन्यापुरवि-
मानहर्म्म्यतले विशालकोमलतलं शय्यातलमधि-
शयानां यदृच्छयोपलभ्य दिष्ट्येयं सुप्ता परिजनश्च
गाढ़निद्रः शेतामयमत्र मुहूर्त्तमात्रं ब्राह्मणकुमारो
यावत् क्रतकृत्या निवर्त्तयेति त्वां तत्र शाययित्वा
तमुद्देशमगमम्। दृष्ट्वा चोत्सवश्रियं निर्विश्य च
स्वजनदर्शनसुखम् अभिवाद्य च त्रिभुवनेश्वर मा-
लालीकप्रत्याकलनोपारूढ़साध्वसश्च नमस्कृत्य भक्ति-
प्रणतहृदयां भगवतीमम्बिकां तया गिरिदुहिता
देव्या सस्मितमयि भद्रे माभैषीर्भवेदानीं भर्तृपार्श्व-
गामिनी गतस्ते शापस्त्वयनुगृहीता सद्यएव प्रत्या-
पन्नमहिमा प्रतिनिवृत्त्य दृष्ट्वैव त्वां यथावद्भ्यजानं
कथं मत्सुतएवायं वत्सस्यार्थपालस्य प्राणभूतः सखा

प्रवृत्तिरिति पापया मया अस्मिन्नज्ञानादौदासीन्य-माचरितम्। अपि चायमस्यामासक्तभावः कन्या चैनं कामयते युवानम् उभौ चेमौ लज्जमानौ त्रपया साध्वसेन वान्योन्यमात्मानं न विवृणाते गन्तव्यञ्च मया कामाघ्रातयापि अनया कन्यया रहस्यरक्ष-णाय न समाभाषितः सखीजनः परिजनो वा न-यामि तावत् कुमारं पुनरपीममर्थं लब्धलक्षणो यथोपपन्नैरुपायैः साधयिष्यतीति मत्प्रभावप्रख्या-पितं भवन्तमेतदेव पत्रशयनं प्रत्यनैषम्। एवमिदं वृत्तम् एषा चाहं पितुस्ते पादमूलं प्रत्युपसर्पेय-मिति प्राञ्जलिं मां भूयः परिष्वज्य शिरस्युपाघ्राय कपोलयोश्चुम्बित्वा स्नेहविक्लवा गतासीत्।

अहञ्च पञ्चवाणवश्यः श्रावस्तीमभ्यवर्त्तिषि मार्गे च महति निगमे नैगमानां ताम्रचूड़युद्धको-लाहलो महानासीत्। अहञ्च तत्र सन्निहितः किञ्चिदस्मैषि सन्निधिनिषण्णस्तु मे वृद्धविटः कोपि ब्राह्मणः शनकैः स्मितहेतुमपृच्छत्। अब्रवञ्च कथ-मिव नारिकेलजातेः प्राच्यवाटकुक्कुटस्य प्रतीच्यवाटः पुरुषैरसमीक्ष्य वलाकाजातिस्ताम्रचूड़ो बलप्रमाणा-धिकस्यैवं प्रतिविसृष्टइति। सोऽपि तज्ज्ञः किम-ज्ञैरेभिर्व्युत्पादितैः तूष्णीमास्वेति उपहस्तिकाया-

स्ताम्बूलं कर्पूरसहितमुद्धृत्य मह्यं दत्त्वा चित्राः कथाः कथयन् क्षणमतिष्ठत्। प्राबुध्यत चातिसंरब्धमनुप्रहारप्रवृत्तस्वपक्षमुक्तकण्ठीरवरवं विहङ्गमद्वयम्। जितश्चासौ प्रतीच्यवाटकुक्कुटः। सोऽपि विटः [स्वकुक्कुट] विजयप्रहृष्टो मयि वयोविरुद्धं सख्यमुपेत्य तदहरेव स्वगृहे स्नानभोजनादि कारयित्वा उत्तरेद्युः श्रावस्तीं प्रति यान्तं मामनुगम्य स्मर्त्तव्योऽस्मि सत्यर्थेइति मित्रवद्विसृज्य प्रत्ययासीत्। अहञ्च गत्वा श्रावस्तीमध्वश्रान्तो बाह्योद्यानलतामण्डपे शयितोऽस्मि हंसरवप्रबोधितश्चोत्थाय कामपि क्वणितनूपुरमुखराभ्यां चरणाभ्यां मदन्तिकमुपसर्पन्तीं युवतीमद्राक्षम्। सा त्वागत्य स्वहस्तवर्त्तिनि चित्रपटे लिखितं मत्सदृशं कमपि पुरुषं माञ्च पर्य्यायेण निर्व्वर्णयन्ती स विस्मयं सवितर्कं सहर्षञ्च क्षणमवातिष्ठत। मयापि तत्र चित्रपटे मत्सादृश्यं पश्यता तस्याश्च दृष्टिविचेष्टितमनाकस्मिकं मन्यमानेन ननु सर्व्वसाधारणोऽयं रमणीयः पुण्यारामभूमिभागः किमिति चिरस्थितिक्लेशोऽनुभूयते ननूपवेष्टव्यमित्यभिहिता सा सस्मितमनुगृहीता-

---

स्ववाटेति क्वचित्पाठः।]

स्मीति न्यषीदत्। सङ्कथा च देशवार्त्तानुविद्धा काचनावयोरभूत्। कथासंश्रिता च सा देशातिथिरसि दृश्यन्ते च ते अध्वश्रान्तानीव गात्राणि यदि न दोषोमम गृहेऽद्य विश्रमितुमनुग्रहः क्रियतामिति अशंसत्। अहञ्च अयि मुग्धे नैष दोषोगुण एवेति तदनुमार्गगामी तद्गृहगतो राजार्हेण स्नानभोजनादिनोपचरितः सुखं निषण्णो रहसि पर्य्यपृच्छ्ये। महाभाग दिगन्तराणि भ्रमता कच्चिदस्ति किञ्चिदद्भुतं भवतोपलब्धमिति। ममाभवन्मनसि महदिदमाश्वासपदम् एषा खलु निखिलपरिजनसम्बाधसंलक्षितायाः सखी राजदारिकायाश्चित्रपटे चास्मिन्नपि तदुपरिविरचितसितवितानं हर्म्यतलं तद्गतञ्च प्रकामविस्तीर्णं शरदभ्रपटलपाण्डुरं शयनं तदधिशायिनी च निद्रालीढ़लोचना ममैवेयं प्रतिकृतिरतोनूनमनङ्गेन सापि राजकन्या तावतीं भूमिमारोपिता तस्यामसह्यमदनज्वरव्यथितोन्मादिता सती सखीनिर्बन्धदृष्टविक्रियानिमित्ता चातुर्य्येण द्रूपनिर्म्माणेनैव समर्थमुत्तरं दत्तवती रूपसंवादाच्च संशयादनया दृष्टोभिन्द्यामस्याः संशयं यथानुभवकथनेनेति जातनिश्चयोऽब्रुवं भद्रे देहि चित्रपटमिति। सा त्वर्पितवती मद्धस्ते पुनस्तमादाय तामपि व्याजसुप्ता-

मुल्लसन्मदनरागविह्वलां वल्लभां तत्रैवाभिलिख्य काचि-
द्देवभूता युवतिरीदृशस्य पुनः पार्श्वशायिन्यरण्यानी-
प्रसुप्तेन मयोपलब्धा किलैष स्वप्नवृत्तान्त इत्यालपच्च। दृष्टया
तु तया विस्तरतः पृष्टः सर्वमेव वृत्तान्तमकथयम्।
असौ च सख्याः मन्निमित्तान्यवस्थान्तराण्य कर्णयत्।
तदाकर्ण्य च यदि तव सख्यामनुग्रहोन्मुखं मानस-
ङ्गमय कानिचिद्दिनानि कमपि कन्यापुरे निराशङ्क-
निवासकरणमुपायमारचय्यागमिष्यामीति कथञ्चिद्दे-
नामभ्युपगमय्य गत्वा तदेव खर्वटं वृद्धविटेन सम-
गंसि। ससम्भ्रमं सोऽपि विश्रमय्य तथैव स्नानभोज-
नादि कारयित्वा रहस्यपृच्छत्। आर्य कस्य हेतो-
रचिरात्प्रत्यागतोऽसि।

प्रत्यवादिषमेनं स्थानएवाहमार्य्येणास्मि पृष्टः
श्रूयतामस्ति हि श्रावस्ती नाम नगरी तस्याः
पतिरपर इव धर्म्मपुत्रो धर्म्मवर्द्धनो नाम राजा।
तस्य दुहिता प्रत्यादेश इव श्रियः प्राण इव कुसुम-
धन्वनः सौकुमार्य्यविडम्बितनवमालिका नवमालिका
नाम कन्यका। सा मया समापत्तिदृष्टा कामनाराच-
पंक्तिमिव कटाक्षमालां मम मर्म्मणि व्यकिरत्।
तच्छल्योद्धरणक्षमश्च धन्वन्तरिसदृश स्त्वदृते नेतरो-
ऽस्ति वैद्य इति प्रत्यागतोऽस्मि तत्प्रसीद कञ्चिदुपाय-

माचरितुम्। अयमहं परिवर्त्तितस्त्रीवेषस्ते कन्या नाम भवेयम्। अनुगतस्च मया त्वमुपगम्य धर्म्मासनगतं धर्म्मवर्द्धनं वक्ष्यसि। ममेयमेकैव दुहिता जातमात्रायान्त्वस्याः जनन्यस्याः संस्थिता माता च पिता च भूत्वाहमेव व्यवर्द्धयम्। एतदर्थमेव विद्यामयं शुल्कमर्जितुं गतोऽभूदवन्तिनगरीमुज्जयिनीमस्मद्वैवाहिककुलजः कोपि विप्रदारकः। तस्मै चेयमनुमता दातुम् इतरस्मै न योग्या तरुणीभूता चेयं सच विलम्बित स्तेन तमानीय पाणिमस्या ग्राहयित्वा तस्मिन्न्यस्तभारः संन्यसिष्ये। दुरभिरक्षतया तु दुहितॄणां मुक्तशैशवानां विशेषतश्चामातृकाणाम् इह देवं मातृपितृस्थानीयं प्रजानामापन्नशरणमागतोऽस्मि। यदि वृद्धं ब्राह्मणमधीतिमगतिमतिथिञ्च मामनुग्राह्य पक्षे गणयत्यादि राजचरितधुर्य्यो देवः सैषा भवद्भुजतरुच्छायामखण्डितचारित्रा तावदध्यास्तां यावदस्याः पाणिग्राहकमानयेयमिति। सएवमुक्तोनियत मभिमनायमानः स्वदुहितृसन्निधौ मां वासयिष्यति। गतस्तु भवानागामिनि मासि फाल्गुने फाल्गुनीषूत्तरासु राजान्तःपुरजनस्य तीर्थयात्रोत्सवोभविष्यति तीर्थस्थानात्प्राच्यां दिशि गोरुतान्तरमतिक्रम्य वानीरवलयमध्य-

वर्त्तिनि कार्त्तिकेयगृहे करतलगतेन शुक्लाम्बर युगलेन स्थास्यसि स खल्वहमनभिशङ्क ऐवैतावन्तं कालं सह विहृत्य राजकन्यया भूयस्तस्मिन्नुत्सवे गङ्गाम्भसि विहरन् विहार व्याकुले कन्यकासमाजे मग्नोऽपसृतः त्वदभ्यासएवोन्मङ्क्ष्यामि । पुनस्त्वदुपहृते वाससी परिधायापनीतदारिकावेषो जामाता नाम भूत्वा त्वामेवानुगच्छेयम् । नृपात्मजा तु मामितस्ततोऽन्विष्यानासादयन्ती तया विना न भोक्ष्य इति रुदन्त्येव स्थास्यति । तन्मूले च महति कोलाहले क्रन्दत्सु परिजनेषु रुदत्सु सखीजनेषु शोचत्सु पौरजनेषु किं कर्त्तव्यतामूढे सामात्ये पार्थिवे त्वमास्थानीमेत्य मां स्थापयित्वा वक्ष्यसि । देव सएष मे जामाता तत्रार्हति श्रीभुजाराधनम् अधीती चतुर्ष्वाम्नायेषु गृहीती षट्स्वङ्गेष्वान्वीक्षिकीविचक्षणश्चतुःषष्टिकलागमप्रयोगचतुरो विशेषेण गजरथतुरङ्गतन्त्रवित् इष्वसनास्त्रकर्म्मणि गदायुद्धे च निरुपमः पुराणेतिहासकुशलः कर्त्ता काव्यनाटकाख्यायिकानां वेत्ता सोपनिषदोऽर्थशास्त्रस्य निर्मत्सरी गुणेषु विश्रम्भी सुहृत्सु शक्तः सम्विभागशील श्रुतधरो गतस्मयश्च नास्य दोषमणीयांसमप्युपलभे नच गुणेष्वविद्यमानम् । तन्मादृशस्य ब्रा-

त्प्रणामाय्रस्य न लभ्य एष सम्बन्धो दुहितरमस्मै स- मर्थ्य वार्द्धकोचितमन्त्यमाश्रमं संक्रमेयं यदि देवः साधु मन्यतइति । स इदमाकर्ण्य वैवर्ण्याक्रान्त- वक्त्रः परमुपेतोवैलच्यमारभ्रतेऽनुनेतुमनित्यताभि- सङ्कीर्त्तनेनात्रभवन्तं मन्त्रिभिः सह । त्वन्तु तेषा- मदत्तश्रोत्रो मुक्तकण्ठं रुदित्वा चिरस्य वाष्पकु- ण्ठकण्ठः काष्ठान्याहृत्याग्निं सन्धुक्ष्य राजमन्दिर- द्वारे चिताधिरोहणायोपक्रमिष्यसे स तावदेव त्व- त्पादयोर्निपत्य सामात्यो नरपतिरभिमतैरर्थैस्त्वामु- पच्छन्द्य दुहितरं मह्यं दत्त्वा मद्योग्यतासमाराधितः समस्तमेव राज्यभारं मयि समर्पयिष्यति । सोऽय- मभ्युपायोऽनुष्ठेयो यदि तुभ्यं रोचतइति ।

सोपि पटुर्व्विटानामग्रणीरसकृतदभ्यस्तकपटप्र- पञ्चः पाञ्चालशर्म्मणा यथोक्तमभ्यधिकञ्च निपुणमुप- क्रान्तवान् । आसीच्च मम समीहिता नामचिर- कालसिद्धिः । अन्वभवञ्च मधुकरइव नवमालिका- मार्द्रसुमनसम् अस्य राज्ञः सिंहवर्म्मणः साहाय्य- दानं सुहृत्सङ्केतभूमि गमनमित्युभयमपेक्ष्य सर्व्वब- लसन्दोहेन चम्पामिमामुपगतो दैवाद्देव दर्शनसुख- मनुभवामीति ।

श्रुत्वैतत्प्रमतिचरितं स्मितमुकुलितनयनो वि-

लासमायमूर्ज्जितं मृदुप्रायं चेष्टितमिष्टएष मार्गः प्रज्ञावताम् अथेदानीमत्रभवान् प्रविशत्विति मित्रगुप्तमैचत चितीशपुत्रः।

इतिदण्डिनःकृतौ दशकुमारचरिते प्रमतिचरितं नाम पञ्चमउच्छ्वासः।

---

## मित्रगुप्तचरितन्नाम

---

### षष्ठ उच्छ्वासः।

स चाचचचे।

देव सोऽहं (मपि) सुहृत्साधारणभ्रमणकारणः सुह्मेषु दामलिप्ताह्वयस्य नगरस्य वाह्योद्याने महान्तमुत्सवसमाजमालोकयम्। तत्र कचिद-

---

( मपीति पाठः )

तिमुक्तलतामण्डपे कमपि वीणावादेनात्मानं विनोदयन्तं युवानमद्राक्षम् अप्राक्षञ्च भद्र कोनामायमुत्सवः किमर्थं वा समारब्धः केन वा निमित्तेनोत्सवमनादृत्यैकान्ते भवानुत्कण्ठित इव परिवादिनीद्वितीयस्तिष्ठतीति । सोऽभ्यधत्त सौम्य सुह्मपति स्तुङ्गधन्वा नामानपत्यः प्रार्थितवानमुष्मिन्नायतने विस्मृतविन्ध्यवास रागं वसन्त्याविन्ध्यवासिन्याः पादमूलादपत्यद्वयम् । अनयाच किलास्मै प्रतिशयिताय स्वप्ने समादिष्टम् उत्पत्स्यते तवैकः पुत्रो जनिष्यते चैका दुहिता स तु तस्याः पाणिग्राहकमनुः जीविष्यति सा तु सप्तमाद्वर्षादस्यारापरिणयनात्प्रतिमासं कृत्तिकासु कन्दुकनृत्येन गुणवद्भर्तृलाभाय मां समाराधयतु यञ्चाभिलषेत्तामुष्मै देया सचोत्सवः कन्दुकोत्सवनामास्त्विति । ततोऽल्पीयसा कालेन राज्ञः प्रियमहिषी मेदिनी नामैकं पुत्रमसूत समुत्पन्ना चैका दुहिता । साद्य नाम कन्या कन्दुकवती सोमपीड़ां देवीं कन्दुकविहारेणाराधयिष्यति । तस्यास्तु सखी चन्द्रसेना नाम धात्रेयिका मम प्रियासीत् साचैषु दिवसेषु राजपुत्रेण भीमधन्वना बलवदनुरुद्धा । तदहमुत्कण्ठितो म-

न्मथ शरशल्यदुःखोद्विग्नचेताः कलेन वीणारवेणा-त्मानं किञ्चिदाश्वासयन् विविक्तमध्यासइति।

अस्मिन्नेव च क्षणे किमपि नूपुरक्वणितमुपाति-ष्ठत्। आगता च काचिदङ्गना दृष्ट्वैव स एनामुत्-फुल्लदृष्टिरुत्थायोपगुह्यगाढ़मुपगूढ़श्च तया ततैवो-पाविशत् अशंसच्च सैषा मे प्राणसमा यद्विरहो दह-नइव दहति माम् इदञ्च जीवितमपहरता राज-पुत्रेण मृत्युनेव निरुष्णतां नीतः नच शक्ष्यामि राज-सूनुरित्यमुष्मिन्पापमाचरितुम्। अतोऽनायत्मानं सु-दृष्टं कारयित्वा त्यक्ष्यामि निष्प्रतिक्रियान् प्राणा-निति। सा तु पर्य्यश्रुमुखी समभ्यधात् मास्म नाथ मत्कृतेऽध्यवस्यः साहसं यस्त्वमुत्तमात्सार्थवाहादर्थ-दासादुत्पद्य कोशदासइति गुरुभिरभिहितनाम-धेयः पुनर्वेशत्यासङ्गाद्वेशदासइति द्विषद्भिः प्रख्या-पितोऽसि तस्मिंस्त्वय्युपरते यद्यहं जीवेयं नृशंसो वेश-इति समर्थयेयं लोकवादम् अतोऽद्यैव नय मामीप्सि-तं देशमिति। सतु मामभ्यधत्त भद्र भवद्दृष्टेषु राष्ट्रेषु कतमत्समृद्धं सम्पन्नशस्यं सत्पुरुषभूयिष्ठञ्चेति। त-मह मीषद्विहस्याब्रूवं भद्र विस्तीर्णेयमर्णवाम्बरा न पर्य्यन्तोऽस्ति स्थाने स्थाने रम्याणां जनपदानाम्। अपि तु नचेदिह युवयोः सुखनिवास कारणं कम-

मुपायमुत्पादयितुं शक्नुयां ततोऽहमेव भवेयमध्य-
दर्शी। तावतोदैरयन् रणितानि मणिनूपुराणाम्।
अथासौ जातसम्भ्रमा प्राप्नैवेयं भर्तृदारिका कन्दु-
कावती कन्दुकक्रीड़ितेन देवीं विन्ध्यवासिनीमारा-
धयितुम्। अनिषिद्धदर्शना चेयमस्मिन् कन्दुको-
त्सवे सफलमस्तु युष्मच्चचुरागच्छतां द्रष्टुम् अह-
मस्याः सकाशवर्त्तिनी भवेयमित्ययासीत्। ताम-
न्वयाव चावाम्। महति रत्नरङ्गपीठे स्थितां प्रथमं
ताम्नोष्ठीमपश्यम्। अतिष्ठच्च सा सद्यएव मम हृ-
दये न मयान्येन वान्तराले दृष्टा चित्तीयाविष्टचित्त-
श्चाचिन्तयं किमियं लक्ष्मीः नहि नहि तस्या हस्ते
विन्यस्तं कमलम् अस्यास्तु हस्तएव कमलम्। भुक्ता-
पूर्वा चासौ पुरातनेन पुंसा पूर्व्वराजैश्च अस्याः
पुनरनवद्यमयातयामञ्च यौवनमिति चिन्तयत्येव
मयि सा अनवद्य सर्व्वगात्री व्यत्यस्तहस्तपल्लवाग्रस्पृ-
ष्टभूमिरालोलनीलकुटिलालका सविभ्रमं भगवती-
मभिवन्द्य कन्दुकममन्दरागरूषिताक्षमनङ्गमिवाल-
म्बत। लीलाशिथिलञ्च भूमौ मुक्तवती मन्दोत्थि-
तञ्च किञ्चित् कुञ्चिताङ्गुष्ठेन प्रसृतकोमलाङ्गुलिना
पाणिपल्लवेन समाहृत्य हस्त पृष्ठेन चोन्नीय चटुल-
दृष्टिलाञ्छितं स्तवकमिव भ्रमरमालानुविद्ध मवप-

तन्तमाकाश एवाग्रहीत् अमुञ्चञ्च मध्यविलम्बितलये द्रुतलये च मृदुमृदुप्रहरन्ती तत्क्षणं चूर्णपदमदर्शयत्। प्रशान्तञ्च तं निर्दय प्रहारैरुदपातयत् विपर्य्ययेण च प्राशमयत्। पक्षवृत्त्यागतञ्च वाम दक्षिणाभ्यां कराभ्यां पर्य्यायेणाभिघ्नती शकुन्तमिवोदस्थापयत् दूरोत्थितञ्च प्रपतन्तमभिहत्य गीतमार्गमारचयत्। प्रतिदिशञ्च गमयित्वा प्रत्यागमयत्।

एवमनेककरणमधुरं विहरन्ती रङ्गगतस्य रक्तचेतसो जनस्य प्रतिक्षणमुच्चावचाः प्रशंसावाचः प्रतिगृह्णन्ती तत्क्षणारूढ़विस्रम्भं कोशदासमंसेऽवलम्ब्य कण्टकितगण्डमुत्फुल्लेक्षणञ्च मय्याभिमुखीभूय तिष्ठति तत्प्रथमावतीर्णकन्दर्पकारितकटाक्षदृष्टि स्तदनुमार्गविलसित लीलाञ्चित [भ्रूलता] श्वासानिलवेगान्दोलितैर्दन्तच्छदरश्मिजालैर्लीला पल्लवैरिव मुखकमलपरिमलग्रहणलोलानलिनस्ताड़यन्ती मण्डल भ्रमणेषु कन्दुकस्यातिशीघ्रप्रचारतया विशन्तीव मद्दर्शनलज्जया पुष्पमयं पञ्जरं पञ्चविन्दुप्रसृतेषु पञ्चापिपञ्चवाणवाणान् युगपदिवाभि पततस्त्रासेनावघट्टयन्ती गोमूत्रिकाप्रचारेषु घनदर्शित-

( भ्रूपताकेति पुस्तकान्तरे)

रागविभ्रमा विद्युल्लतामिव विडम्बयन्ती भूषणमणि-रणितदत्तलयसम्बादिपादचारम् अप्रदेशस्मितप्रभानिषिक्तबिम्बाधरम् (अवसंसितप्रतिसमाहितशिखण्डभारं )समाघटितक्वणितरत्नमेखलागुणम् अञ्चितोत्थितपृथुनितम्बविलम्बितविचलदंशुकोज्ज्वलम् आकुञ्चितप्रसृतवेल्लितभुजलताभिहतललितकन्दुकम् आवर्जितग्राङ्गप्राशम् उपरि परिवर्त्तित त्रिकविलग्नलोलकुन्तलम् अवगलितकर्णपूरकनकपत्रप्रतिसमाधान शीघ्रतानतिक्रमितप्रक्रान्तक्रीड़नम् असकृदुत्क्षिप्यमाणहस्तपादबाह्याभ्यन्तरभ्रान्तकन्दुकम् अवनमनोन्नमननैरन्तर्य्यनष्टदृष्टमध्ययष्टिकम् अवपतनोत्पतननिर्व्यवस्थमुक्ताहारम् अङ्कुरितघर्म्मसलिलदूषितकपोलपत्रभङ्गशोषणाधिकृतश्रवणपल्लवानिलम् आगलितस्तनतटांशुकनियमनव्यापृतैकपाणिपल्लवञ्च निषद्योत्थाय निमील्योन्मील्य स्थित्वा गत्वा चैवातिचित्रं पर्य्यक्रीड़त राजकन्या। अभिहत्य भूतलाकाशयोरपि क्रीड़ान्तराणि दर्शनीयान्येकेनैव वानेकेनैव कन्दुकेनादर्शयत्। चन्द्रसेनादिभिश्च प्रियसखीभिः सह विहृत्य विहृतान्ते चाभिवन्द्य देवीं मनसा से सानुरागेणेव परिजनेनानुगम्यमाना कुवलयशर-

---

( अंस संसितेत्यादि क्वचित्पाठः )

मिव कुसुमशरस्य मय्यपाङ्गं समर्पयन्ती सापदेशमस-
कृदावर्त्त्यमानवदनचन्द्रमण्डलतया स्वहृदयमिव
मत्समीपे प्रेरितं प्रतिनिवृत्तं नवेत्यालोकयन्ती
सह सखीभिः कुमारीपुरमगमत्।

अहञ्चानङ्गविह्वलः स्ववेश्म गत्वा कोशदासेन
यत्नवदत्युदारं स्नानभोजनादिकमनुभावितोऽस्मि।
सायञ्चोपसृत्य चन्द्रसेना रहसि मां प्रणिपत्य प्रत्युं-
समंसेन प्रणयपेशलमाघट्टयन्त्यपाविशत्। आचष्ट
च हृष्टः कोशदासः भूयासमेवं यावदायुरायताक्षि
त्वत्प्रसादस्य पात्रमिति। मया तु सस्मितमभि-
हितं सखे किमेतदाशास्यम् अस्ति किञ्चिदञ्जनम-
नया तदक्तनेत्रया राजसूनुरुपस्थितो वानरीमिवैनां
द्रक्ष्यति विरक्तस्वैनां पुनस्त्यक्ष्यतीति। तया तु सोर-
यास्मि कथितः सोऽयमार्य्येणाज्ञाकरो जनोऽत्यर्थमनु
गृहीतः यदस्मिन्नेव जन्मनि मानुषं वपुरपनीय वा-
नरीकरिष्यते। तदास्तामिदम् अन्यथापि सिद्धं नः
समीहितम्। अद्य खलु कन्दुकोत्सवे भवन्तमव-
हसितमनोभवाकारमभिलषन्ती रोषादिव हृदि-
घातिमात्रमायास्यते राजपुत्री सोऽयमर्थो विदित-
भावया मया क्षमात्रे तया च तन्मात्रे महिष्या च
मनुजेन्द्राय निवेदयिष्यते। विदितार्थस्तु पार्थिव-

त्वया दुहितुः पाणिं ग्राहयिष्यति। ततश्च त्वदनुजीविना राजपुत्रेण भवितव्यम्। एष हि दैवतासमादिष्टो विधिः त्वदायत्ते च राज्ये नालमेव त्वामतिक्रम्य मामेवं रोद्धुं भीमधन्वा। तत्सह्यतामयं त्रिचतुराणि दिनानीति मामामन्त्र्य प्रियञ्चोपगूह्य प्रत्ययासीत्। मम च कोशदासस्य च तदुक्तानुसारेण च बहु विकल्पयतोः कथञ्चिदक्षीयत क्षपा।

क्षपान्ते च कृतयथोचितनियमस्तमेव प्रियादर्शनसुभागमुद्यानोद्देशमुपागतोऽस्मि। तत्रैव चोपसृत्य राजपुत्रो निरभिमानमभिमुखीभिः कथाभिर्मामनुवर्त्तमानो मुहूर्त्तमास्त। नीत्वा चोपकार्य्यामात्मसमेन स्नानभोजनशयनादिव्यतिकरेणोपाचरत्। तत्र गतश्च स्वप्ने नानुभूयमानप्रियादर्शनालिङ्गनसुखमायसेन निगड़ेनातिबलवत् बहुपुरुषैः पीवरभुजदण्डोपरुद्धमबन्धयन्माम् प्रतिबुद्धश्च सहसा समभ्यधात्। अयि दुर्म्मते श्रुतमालपितं हतायाश्चन्द्रसेनाया जालरन्ध्रानिःसृतं तच्चेष्टावबोधप्रयुक्तयानया कुब्जया। त्वं किलाभिलाषितो वराक्या कन्दुकावत्या तव किलानुजीविना मया स्थेयं त्वद्वचः किलानतिक्रमता मया चन्द्रसेना कोशदासाय दास्यत इत्युक्त्वा पार्श्वचरं पुरुषमेकमालोक्याकथयत् प्रचि-

पैनं सागरइति। सतु लब्धराज्यइवातिहृष्टो देव यदाज्ञापयसीति यथादिष्टमकरोत्। अहन्तु निरालम्बनो भुजाभ्यामितस्ततः स्पन्दमानः किमपि काष्ठं दैवदत्तमुरसोपश्लिष्य तावदतोषि। यावदपासरद्वासरः शर्व्वरी च सर्व्वा। प्रत्युषस्यदृश्यत किमपि वहित्रम् अनुतासन् यवनाः ते मामुद्धृत्य रामेषुनाम्ने नाविकनायकाय कथितवन्तः कोप्ययमायसनिगलबद्ध एव जले लब्धः पुरुषः सोयमपि सिद्धेत्सहस्रं द्राक्षाणां क्षणेनैकेनेति। अस्मिन्नेव क्षणे नैकनौकापरिवृतः कोपि मद्गुरभ्यधावत्। अबिभयुर्यवनास्तावदतिजवना नौकाः श्वानइव वराहमस्मत्पोतं पर्य्यरुत्सत। प्रावर्त्तत सम्प्रहारः। पराजयिषत यवनाः तानहमगतीनवसीदतः समाश्वास्यालपिषम् अपनयत मे निगलबन्धनम् अयमहमवसादयामि वः सपत्नानिति। अमी तथा अकुर्व्वन् सर्व्वांश्च तान् प्रतिभटान् भल्लवर्षिणा भीमटङ्कृतेन शार्ङ्गेण लवलवीकृताङ्गानकार्षम्। अवप्लुत्य हतविध्वस्तयोधमस्मत्पोतसंसक्तं पोतम् अमुत्र नाविकनायकमनभिसरमभिपत्य जीवग्राहमग्रहीषम्। असौ चासीत् सएव भीमधन्वा। तञ्चाहमवबुध्य जातव्रीड़मवं तात किं दृष्टानि कृतान्तविलसितानीति।

ते तु सांयात्रिका मदीयेनैव शृङ्खलेन तमतिगाढ़ं बद्ध्वा हर्षकिलकिलारवमकुर्व्वन्मामपूजयन्। दुर्व्वारा तु सा नौरननुकूलवाततुन्ना दूरमभिपत्य कमपि द्वीपं निविड़ामश्लिष्टवती तत्र च स्वादु पानीयमेधांसि कन्दमूलफलानि सञ्चिचीषवो गाढ़पतितशिलावलयमवतराम। तत्र चासीन्महाशैलः सोऽहमहो रमणीयोऽयं पर्व्वतनितम्बभागः कान्ततरेयं गन्धपाषाणवत्युपत्यका शिशिरमिन्दीवरारविन्दमकरन्दबिन्दुचन्द्रकोत्तरं गोत्रवारि रम्योऽयमनेकवर्णकुसुममञ्जरीभरस्तरुवनाभोग इत्यटमया दृशा बहुबहुपश्यन्नलङ्घिताध्यारूढश्चोणीधरशिखरः शोणीभूतसुत्प्रभाभिः पद्मरागसोपानशिलाभिः किमपि नालीकपरागधूसरं सरः समभ्यगाम्। स्नातश्च कांश्चिदम्लतस्वादूंविसभङ्गानास्वाद्य अंसलग्नकह्लारस्तीरवर्त्तिना केनापि भीमरूपेण ब्रह्मराक्षसेनाभिपत्य कोऽसि कुतस्त्योऽसीति निर्भर्त्स्यताभ्यधीये निर्भयेन च मया सोऽभ्यधीयत सौम्य सोऽहमस्मि द्विजन्मा। शत्रुहस्तादर्णवम् अर्णवाद्यवननावं यवननावश्चिचग्रावाणमेनं पर्व्वतप्रदेशं गतो यदृच्छयास्मिन् सरसि विश्रान्तो भद्रं तवेति। सोऽब्रुत नचेद्ब्रवीषि प्रश्नानश्नामि त्वामिति। म-

योक्तं इच्छ तावद्भवत्विति। अथावयोरेकयार्य्ययाऽऽसीत् संलापः।

किं क्रूरं स्त्रीहृदयं किं गृहिणः प्रियहिताय दारगुणाः।
कः कामः सङ्कल्पः किं दुष्करसाधनं प्रज्ञा॥

तत्र धूमिनीगोमिनीनिम्बवतीनितम्बवत्यः प्रमाणमित्युपदिष्टो मया सोऽब्रूत कथय कीदृश्यस्ता इति। अत्रोदाहरम् अस्ति त्रिगर्त्तोनाम जनपद स्तत्रासन् गृहपतयस्त्रयः स्फीतसारधनाः सोदर्य्याः धनकधान्यकधन्यकाख्याः। तेषु जीवत्सु न ववर्ष वर्षाणि द्वादश दशशताक्षः क्षीणसारं शस्यम् ओषध्योबन्ध्याः न फलवन्तो वनस्पतयः क्लीवा मेघाः क्षीणस्रोतसः स्रवन्त्यः पङ्कशेषाणि पल्वलानि निर्निस्यन्दान्युत्समण्डलानि विरलीभूतं कन्दमूलफलम् अवहीनाः कथाः गलिताः कल्याणोत्सवक्रियाः बहुलीभूतानि तस्कर कुलानि अन्योन्यमभक्षयन् प्रजाः पर्य्यलुठन्नितस्ततोवलाकापाण्डुराणि नरशिरःकपालानि पर्य्यहिण्डन्त शुष्काः (काकमण्डल्यः) शून्यीभूतानि नगरग्रामखर्वटपुटभेदनादीनि। तएते गृहपतयः सर्व्वधान्यनिचयमुपयुज्याजाविकं गवलगणं गवां यूथं दासीदासजनमपत्यानि ज्येष्ठमध्यम-

(कामकन्दल्य इति क्वचित्पाठः।)

भार्य्यौ च क्रमेण भक्षयित्वा कनिष्ठभार्य्यां धूमिनी श्वोभक्षणीयेति समकल्पयन्। अथ कनीयान् धन्यकः प्रियां स्वामत्तुमक्षमस्तया सह तस्यामेव निश्यपासरत् मार्गक्लान्ताञ्चोद्वहन्वनं जगाहे। स्वमांसास्रमपनीतक्षुत्पिपासां तां नयन्नन्तरे कमपि च निकृत्तकर्णपाणिपादनासिकमवनिपृष्ठे विचेष्टमानं पुरुषमद्राक्षीत्। तमप्यार्द्राशयः स्कन्धेनोद्वहन् कन्दमूलमृगबहुले गहनोद्देशे यत्नरचितपर्णशालश्चिरमवसत्। अमुञ्च रोपितव्रणमिङ्गुदीतैलादिभिरामिषेण शाकेनात्मनिर्व्विशेषं पुपोष। पुष्टञ्च तमुद्रिक्तधातुमेकदा मृगान्वेषणाय च प्रयाते धन्यके सा धूमिनी रिरंसयोपातिष्ठत् भर्त्सितापि तेन बलात्कारमभ्यरीरमत्। निवृत्तञ्च प्रतिमुदकार्थ्यर्थिनमुद्धृत्य कूपात्त्रिव रुजति मे शिरः शिरोरोगदलुदञ्चनं स रज्जुं पुरश्चिक्षेप। उदञ्चन्तञ्च तं कूपादधः क्षणात्पृष्ठतो गत्वा प्रणुनोद। तञ्च विकलं स्कन्धेनोदुह्य देशाद्देशान्तरं परिभ्रमन्ती पतिव्रताप्रतीतिं लेभे बहुविधाश्च पूजाः पुनरवन्तिराजानुग्रहादतिमहत्या भूत्या न्यवसत्। अथ पानीयार्थिसार्थजनसमापत्ति दृष्टोद्धृतमवन्तिषु भ्रमन्तमाहारार्थिनं भर्त्तारमुप-

लभ्य सा धूमिनी येन मे पतिर्विकलीकृतः स दुरात्मायमिति तस्य साधोश्चित्रवधमज्ञेन राज्ञा समादेशयाञ्चकार। धन्यकस्तु दत्तपश्चाद्बन्धो वध्यभूमिं नीयमानः सशेषत्वादायुषो यो मया विकलीकृतोऽभिमतो भिक्षुः स चेन्मे पापमाचक्षीत युक्तो मे दण्ड इत्यदीनमधिकृतं जगाद। को दोष इत्युपनीय दर्शितेऽमुष्मिन् स विकलः पर्य्यश्रुः पादपतितस्तस्य साधोस्तत्सुकृतमसत्यायाश्च तस्यास्तथाभूतं दुश्चरितमार्य्यबुद्धिराचचक्षे। कुपितेन राज्ञा विरूपितमुखी सा दुष्कृतकारिणी कृता श्वभ्यः पाचिका कृतश्च धन्यकः प्रसादभूमिः। तद्ब्रवीमि स्त्रीहृदयं क्रूरमिति।

पुनरनुयुक्तो गोमिनीवृत्तान्तमाख्यातवान्।

अस्ति द्रविडेषु काञ्ची नाम नगरी तस्यामनेककोटिसारः श्रेष्ठि पुत्रः शक्तिकुमारो नामासीत्। सोऽष्टादशवर्षदेशीयश्चिन्तामापेदे नास्त्यदाराणामननुगुणदाराणां वा सुखं नाम तत्कथन्नु गुणवद्विन्देयं कलत्रमिति। अथ परप्रत्ययाहृतेषु दारेषु यादृच्छिकां सम्पत्तिमनभिसमीक्ष्य कार्त्तान्तिको नाम भूत्वा वस्त्रान्तपिनद्धशालिप्रस्थो भुवं बभ्राम। लक्षणज्ञोऽयमित्यमुष्मै कन्याः कन्यावन्तः प्रदर्शयाम्ब-

भूवुः। यां काञ्चिल्लक्षणवतीं सवर्णां कन्यां दृष्ट्वा स किल स्म ब्रवीति भद्रे शक्नोषि किमनेन शालिप्रस्थेन गुणवदन्नमस्मानभ्यवहारयितुमिति। स हसितावधूतो गृहाद्गृहं प्रविश्याभ्रमत्। एकदा तु शिविषु कावेरीदक्षिणतीरेषु पट्टने सह पितृभ्यामवसित महर्द्धिमवशीर्णभवनसारां धात्र्या प्रदर्श्यमानां काञ्चन विरलभूषणां कुमारीं ददर्श। अस्यां संसक्तचक्षुश्चातर्कयत्। अस्याः खलु कन्यकायाः सर्वएवावयवाः नातिस्थूला नातिकृशा न ह्रस्वा नातिदीर्घा न विकटा मृजावन्तश्च। रक्ततलाङ्गुली यवमत्स्यकमलकलशाद्यनेकपुण्यलेखालाञ्छितौ करौ। समगुल्फसन्धी मांसलावशिरालौ चाङ्घ्रीजङ्घे चानुपूर्व्ववृत्ते। पीवरोरुग्रस्तेइव दुरुपलक्ष्ये जानुनी। सकृद्विभक्तचतुरस्रः ककुन्दरविभागशोभी रथाङ्गाकारसंस्थितश्च नितम्बभागः। तनुतरमीषन्निम्नं गम्भीरं नाभिमण्डलं वलित्रयेण चालङ्कृतमुदरम्‌ उरोभागव्यापिनावुन्मग्नचूचुकौ विशालारम्भशोभिनौ पयोधरौ। धनधान्यपुत्रभूयस्त्वचिह्नलेखालाञ्छिततले स्निग्धोदरकोमलनखमणीपाणी ऋज्वनुपूर्व्ववृत्तताम्राङ्गुली सन्नतांसदेशे सौकुमार्य्यवत्यौ निमग्नपर्व्वसन्धी च बाहुलते। तन्वी कम्बुवृत्त-

बन्धुरा च कन्धरा। वृत्तमध्य विभक्तरागाधरम् असंक्षिप्तचारुचिबुकम् आपूर्णकठिनगण्डमण्डलम सङ्गतानुवक्रनीलस्निग्धभ्रूलतम् अनतिप्रौढ़तिलकुसुमसदृशनासिकम् अत्यसितधवलरक्तत्रिभागभासुरमधुराधीरसञ्चारमन्थरायते चणम् इन्दुशकलसुन्दरललाटम् इन्द्रनीलशिलाकाररम्यालकपंक्ति द्विगुणकुण्डलितम्लाननालीकनालललितलम्बश्रवणपाशयुगलमाननकमलम् । अनतिभङ्गुरो बहुलः पर्य्यन्तेऽप्यकपिलच्छविरायामवानेकैकनिसर्गसमस्निग्धनीलो गन्धग्राही च मूर्द्धजकलापः। सेयमाकृति र्न व्यभिचरति शीलमासज्जति च मे हृदयमस्यामेव तत्परीक्ष्यैनामुद्वहेयम् अविमृश्यकारिणां हि नियतमनेकाः पतन्त्यनुशयपरम्परा इति स्निग्धदृष्टिराचष्ट। भद्रे कच्चिदस्ति कौशलं शालिप्रस्थेनानेन सम्पन्नमाहारमस्मानभ्यवहारयितुमिति । ततस्तया वृद्धदासी साकूतमालोकिता। तस्य हस्तात्प्रस्थमात्रधान्यमादाय क्वचिदलिन्दोद्देशे सुसिक्तसंमृष्टे दत्तपादशौचमुपावेशयत्। सा कन्या तान् गन्धशालीन् संक्षुद्यमात्रया विशोष्यातपे मुहुर्मुहुः परिवर्त्त्य स्थिरसमायां भूमौ नालीपृष्टेन मृदु मृदु घट्टयन्ती तुषैरखण्डैस्तण्डुलान् पृथक् च-

कार जगाद च धात्रीं मातरेभिस्तुषैरर्थिनो भूषण-मृजाक्रियाक्षमैः स्वर्णकारास्तेभ्य इमान् दत्त्वा ल-ब्धाभिः काकिणीभिः स्थिरतराण्यनत्यार्द्राणि नाति-शुष्काणि काष्ठानि मितम्पचां स्थालीमुभे शरावे चाहरेति। तथाकृते तया तांस्तण्डुलाननतिनि-म्नोत्तानविस्तीर्णकुक्षौ ककुभोलूखले लोहपत्रवेष्टि-तमुखेन समशरीरेण विभाव्यमानमध्यतानवेन व्यायतेन गुरुणा खादिरेण मुषलेन चतुरललि-तोत्क्षेपणावक्षेपणायासितभुजमसकृदङ्गुलीभिरुद्धृ-त्यावहत्य (शूर्पशोधितकणकिंशारुकांस्तण्डुलानसकृ-द्भिः) प्रक्षाल्य क्वथितपञ्चगुणे जले दत्तचुल्लीपूजा प्राक्षिपत्। प्रश्लथावयवेषु प्रस्फुरत्सु तण्डुलेषु मुकुलावस्थामतिवर्त्तमानेषु संक्षिप्यानलमुपहितमु-खपिधानया स्थाल्या अन्नमण्डमगालयत्। दर्व्या चावगाह्यमानतया परिवर्त्त्य समपक्वेषु सिक्थेषु तां स्थालीमधोमुखीमवातिष्ठिपत्। इन्धनान्यन्तः सा-राण्यम्भसा समभ्युक्ष्य प्रशमिताग्नीनि कृष्णाङ्गारी-कृत्य तदर्थिभ्यः प्राहिणोत्। एभिर्लब्धाः काकि-णीर्दत्त्वा शाकं घृतं दधि तैलमामलकं चिञ्चाफलञ्च यथालाभमानयेति। तथानुष्ठिते च तया द्वित्रा-

(शूर्पशोधितकणतुषादीन् तण्डुलानसकृद्भिरिति पाठान्तरम्।

नुपदंशानुपपाद्य तदन्नमखण्डमार्द्रवालुकोपहितनवशरावगतमिति मृदुना तालवृन्तानिलेन शीतलीकृत्य सलवणसम्भारं दत्ताङ्गारधूपवासञ्च सम्पाद्य तदप्यामलकं श्लक्ष्णपिष्टमुत्पलगन्धि कृत्वा धात्रीमुखेन स्नानाय तमचोदयत्। तया च स्नानशुद्धया दत्ततैलामलकः क्रमेण सस्नौ। स्नातः सिक्तमृष्टे कुट्टिमे फलकमारुह्य पाण्डुहरितस्य त्रिभागशेषलूनस्याङ्गनकदलीपलाशस्य उपरि शरावद्वयदत्तमार्द्रमभिमृश्यन्नतिष्ठत्। सा तु तां पेयामेवाग्रे समुपाहरत्। पीत्वा (चापनीताध्वक्लमः) प्रहृष्टः प्रक्लिन्नसकलगात्रः स्थितोऽभूत्। ततस्तस्य शाल्योदनस्य दर्वीद्वयं दत्त्वा सर्पिर्मात्रां सूपमुपदंशञ्चोपजहार। इममुञ्च दध्ना च त्रिजातकावचूर्णितेन सुरभिशीतलाभ्याञ्च कालशेयकाञ्जिकाभ्यां शेषमन्नमभोजयत्। सशेषएवान्धस्यसावटम्पत् अयाचत च पानीयम्। अथ नवभृङ्गारसम्भृतमगुरुधूपधूपितमभिनवपाटलाकुसुमवासितमुत्फुल्लोत्पलग्रथितसौरभं वारि नालीधारात्मना पातयाम्बभूव। सोऽपि मुखोपहितशरावेण हिमशिशिरकणकरालिताक्षायमानाक्षिपक्ष्माधारारवाभिनन्दितश्रवणः

(चापनीत धर्मश्रम इति क्वचित्पाठः)

स्पर्शसुखोद्भिन्नरोमाञ्चकर्कशकपोलपरिमलप्रवालोत्पीड़फुल्लघ्राणरन्ध्रो माधुर्य्यप्रकर्षावर्जितरसनेन्द्रियस्तदच्छं पानीयमाकण्ठं पपौ। शिरःकम्पसंज्ञावारिता च पुनरपरकरकेणाचमनमदत्त कन्या। वृद्धया तु तदुच्छिष्टमपोह्य हरितगोमयोपलिप्ते कुट्टिमे स्वमेवोत्तरीयकर्पटं व्यवधाय क्षणमशेत। परितुष्टश्च विधिवदुपयम्य कन्यां निन्ये। नीत्वैतदनपेक्षः कामपि गणिकामवरोधमकरोत् तामप्यसौ प्रियसखीमिवोपाचरत् पतिञ्च दैवतमिव मुक्ततन्द्रा पर्य्यचरत् गृहकार्य्याणि चाहीनमन्वतिष्ठत् परिजनञ्च दाक्षिण्यनिधिरात्माधीनमकरोत्। तद्गुणवशीकृतश्च भर्त्ता सर्व्वमेव कुटुम्बं तदायत्तमेव कृत्वा तदेकाधीनजीवितशरीरस्त्रिवर्गं निर्व्विवेश। तद्ब्रवीमि गृहिणः प्रियहिताय दारगुणाइति।

ततस्तेनानुयुक्तोनिम्बवतीवृत्तमाख्यातवान्।

अस्ति सौराष्ट्रेषु वलभी नाम नगरी तस्यां गृहगुप्तनाम्नो गुह्यकेन्द्रतुल्यविभवस्य नाविकपतेर्दुहिता रत्नवती नाम। तां किल मधुमत्याः समुपागम्य बलभद्रो नाम सार्थवाहपुत्रः पर्य्यणैषीत्। तयापि नववध्वा रहसि रभसविघ्नितसु-

रतसुखो झटिति द्वेषमल्पेतरं बबन्ध न तां पुनर्द्र-
ष्टुमिष्टवान्। तद्गृहागमनमपि सुहृद्वाक्यशतातिवर्त्ती लज्जया परिजहार तांश्च दुर्भगां तदाप्रभृत्येव नेयं रत्नवती निम्बवती चेयमिति स्वजनः परिजनश्च पर्यबभूव। गते च कस्मिंश्चित्कालान्तरे सा तु तप्यमाना का मे गतिरिति विमृशन्ती काममपि वृद्धप्रव्राजिकां मातृस्थानीयां देवशेषकुसुमैरुपस्थितामपश्यत्। तस्याः पुरो रहसि सकरुणं रुरोद। तयाप्यश्रुमुख्या बहुप्रकारमनुनीय रुदितकारणं पृष्टा त्रपमानापि कार्य्यगौरवात्कथञ्चिदब्रवीत्। अम्ब किं ब्रवीमि दौर्भाग्यं नाम जीवन्मरणमङ्गनानां विशेषतश्च कुलबधूनां तस्याहमस्म्युदाहरणभूता। मातृप्रमुखोपि ज्ञातिवर्गो मामवज्ञयैव पश्यति तेन सुदृष्टां मां कुरु नचेत् त्यजेयमद्यैव निष्प्रयोजनान् प्राणानाविरामाच्च मे रहस्यं न श्राव्यमिति पादयोः पपात। सैनामुत्थाप्योद्बाष्पोवाच वत्से माध्यवस्यः साहसम्। इयमस्मि त्वन्निदेशवर्त्तिनी यावति मयोपयोगः तावति भवाम्यनन्याधीना यद्येवासि निर्व्विण्णा तपश्चर त्वं मदधिष्ठिता पारलौकिकाय कल्याणाय। नन्वयमुदर्कः प्राक्तनस्य दुष्कृतस्य यदनेनाकारेणेदृशेन शीलेन जाता चैवम्भूतया स-

मनुगता सत्यकस्मादेव भर्तृद्वेष्यतां गतासि। यदि कश्चिदस्त्युपायः प्रतिद्रोहप्रतिक्रियायै दर्शयामुं मतिर्हि ते पटीयसीति। अथासौ कञ्चित् क्षणमधोमुखी ध्यात्वा दीर्घोष्णश्वासपूर्व्वमवोचत् भगवति पतिरेकदैवतं वनितानां विशेषतः कुलजानाम्। अतस्तच्छुश्रूषणाभ्युपायहेतुभूतं किञ्चिदाचरणीयम्। अस्त्यस्मत्प्रातिवेश्यो वणिक् अभिजनेन विभवेनराजान्तरङ्गभावेन च सर्व्वपौरानतीत्य वर्त्तते तस्य कन्या कनकवती नाम मत्समानरूपावयवा ममातिस्निग्धा सखी तया सह तद्विमानहर्म्यतले ततोपि द्विगुणमण्डिता विहरिष्यामि। त्वया तु तन्मातृप्रार्थनं सकरुणमभिधाय पतिरेतद्दृष्टं कथञ्चनानेयः। समीपगतेषु च युष्मासु क्रीड़ामत्ता नाम कन्दुकं भ्रंशयेयम्। अथ तमादाय तस्य हस्ते दत्त्वा वच्यसि पुत्र तवेयं भार्य्यासखी निधिपतिदत्तस्य सर्व्वश्रेष्ठिमुख्यस्य कन्या कनकवती नाम त्वामियमनवद्यो निष्करुणश्चेति रत्नवतीनिमित्तमत्यर्थं निन्दति तदेष कन्दुको क्षिपच्छधनं प्रत्यर्पणीयमिति। स तथोक्तो नियतमुन्मुखीभूय तामेव प्रियसखीं मन्यमानो मां बद्धाञ्जलि याचमानायै मत्तां भूयस्तत्प्रार्थितः साभिलाषमर्पयिष्यति।तेन रन्ध्रेणोपश्लिष्य

(रागमुन्मुखीकृत्य) यथासौ कृतसङ्केतो देशान्तरमादाय मां गमिष्यति तथोपपादनीयमिति। हर्षाभ्युपेतया चानया तथैव सम्पादितम्। अथैतां कनकवतीति दृष्टतापसी विप्रलब्धो बलभद्रः सरत्नसाराभरणामादाय निशि नीरन्ध्रतमसि प्रावसत्। सा तु तापसी वार्त्तामापादयत् मन्देन मया निर्निमित्तमुपेक्षिता रत्नवती श्वशुरौ च परिभूतौ सुहृदश्चार्त्तिवर्त्तितास्तदत्रैव संसृष्टो जीवितुं जिह्रेमीति बलभद्रः पूर्व्वेद्युर्म्मामकथयत् नूनमसौ तेन नीता व्यक्तिश्चाचिराद्भविष्यतीति। तत् श्रुत्वा तद्बान्धवास्तदन्वेषणं प्रति शिथिलयत्नास्तस्थुः। रत्नवती तु मार्गे काञ्चित्पण्यदासीं संगृह्य तयोह्यमानपाथेयाद्युपस्करा खेटकपुरमगमत्। अमुत्र च व्यवहारकुशलो बलभद्रः स्वल्पेनैव मूलेन महद्धनमुपार्ज्जयत् पौराग्रगण्यश्चासीत्। परिजनश्च भूयानर्थवशात्समाजगाम। ततस्तां प्रथमदासीं न कर्म्म करोषि दुष्टं मुष्णासि अप्रियं ब्रवीषीति परुषमुक्त्वा बह्वताड़यत्। चेटी तु प्रमादकालोपाख्यातरहस्यास्या वृत्तान्तैकदेशमात्त रोषा निर्व्विभेद। तत् श्रुत्वा लुब्धेन तु दण्डवाहिना पौरवृद्धसन्निधौ नि-

---

(रागमुज्ज्वलीकृत्येति पाठान्तरम्।)

धिपतिदत्तस्य कन्यां कनकवतीं मोषेणापहृत्यास्मत्पुरे निवसत्येष दुर्मतिर्बलभद्रः तस्य सर्वस्वहरणं न भवद्भिः प्रतिबन्धनीयमिति नितरामभत्र्स्यत। भीतश्च बलभद्रमभिजगाद रत्नवती। न भेतव्यमेव ब्रूहि नेयं निधिपतिदत्तकन्या कनकवती वलभ्यामेव गृहगुप्तदुहिता रत्नवती नामेयं दत्ता पितृभ्यां मया च न्यायोढ़ा। न चेत्प्रतीथ प्रणिधिं प्रहिणुतास्या बन्धुपार्श्वमिति। बलभद्रस्तु तयोक्ता प्रणीरातिभाव्येन तावदवातिष्ठत्। यावत्तत्पुरवृद्धलेख्यलब्धवृत्तान्तो गृहगुप्तः खेटकपुरमागत्य सह जामात्रा दुहितरमतिप्रीतः प्रत्यनैषीत् तया दृष्ट्वा। रत्नवती कनकवतीति भावयतस्तस्यैव बलभद्रस्यातिवल्लभा जाता तद् ब्रवीमि कामो नाम सङ्कल्पद्रति।

तदनन्तरमसौ नितम्बवतीवृत्तान्तमप्राक्षीत् सोऽहमब्रवम्।

अस्ति शूरसेनेषु मथुरा नाम नगरी तत्र कश्चित् कुलपुत्रः कलासु गणिकासु चातिसक्तो मित्रार्थं स्वभुजमात्रनिर्व्यूढ़ानेक कलहः कलहकण्टकद्रति कर्कशैरभिख्यापिताख्यः प्रत्यवात्सीत्। सचैकदा कस्यचिदागन्तोश्चित्रकरस्य हस्ते चित्रपटं ददर्श। तत्र काचिदालेख्यगता युवतिरालोकमात्रेणैव कस्य-

हकण्टकस्य कामातुरं चेतश्चकार। स च तमब्रवीत् भद्र विरुद्धमिवैतत्प्रतिभाति यतः कुलजादुर्लभं वपुराभिजात्यशंसिनी च नम्रता पाण्डुरा च मुखच्छविः अनतिपरिभुक्तसुभगा च तनुः प्रौढतानुविद्धा च दृष्टिः। नचैषा प्रोषितभर्तृका प्रवासचिह्नस्य वेण्यादेरदर्शनात्। लक्ष्म चैतद्दक्षिणपार्श्ववर्त्ति। तदियं वृद्धस्य कस्यचिद्वणिजो नातिपुंस्त्वस्य यथार्हसम्भोगालाभपीड़िता गृहिणी तयातिकौशलाद्यथादृष्टमालिखिता भवितुमर्हतीति। स तमभिप्रशंस्याशंसत् सत्यमिदमवन्तिपुर्यामुज्जयिन्यामनन्तकीर्त्तिनाम्नः सार्थवाहस्य भार्या यथार्थनामा नितम्बवती नाम। एषा सौन्दर्य्यविस्मितेन मया एवमालिखितेति। स तद्दैवोन्मनायमानस्तद्दर्शनाय वव्राजोज्जयिनीम्। भार्गवेनाम भूत्वा भिक्षाभिषेण तद्गृहं प्रविश्य तां ददर्श। दृष्ट्वा चात्यारूढ़मन्मथो निर्गत्य पौरमुखेभ्यः श्मशानरक्षामयाचत अलभत च। तत्र लब्धैश्च शवावगुण्ठनपटादिभिः कामप्यर्हन्तिकां नाम श्रमणिकामुपासाञ्चक्रे। तन्मुखेन च नितम्बवतीमुपमन्त्रयामास। सा चैनां निर्भर्त्सयन्ती प्रत्याचचक्षे। श्रमणिकामुखाच्च दुष्करशीलभ्रंशां कुलस्त्रियमुप-

लब्ध रहसि दूतिकामशिक्षयत् । भूयोऽप्युपतिष्ठ सार्थवाहभार्य्यां ब्रूहि चोपह्वरे संसारदोषदर्शनात्समाधिमास्थाय मुमुक्षमाणोमाहशोजनः कुलवधूनां शीलपातने घटतइति क्व घटते एतदपि त्वामप्युदारया सकला रूपेणातिमानुषेण प्रथमेन वयसोपपन्नां किमितरनारीसुलभं चापलं स्पृष्टं न वेति परीक्षा कृता तुष्टास्मि तथैव मदुष्टभावतया त्वामिदानीमुत्पन्नापत्यां द्रष्टुमिच्छामि । भर्त्ता तु भवत्याः केनचिद्दूग्रहेणाधिष्ठितः पाण्डुरोगदुर्व्वलो भोगे चासमर्थः स्थितोऽभूत् । नच शक्यं तस्य विप्रमप्रतिकृत्यापत्यमस्माल्लब्धुम् । अतः प्रसीद वृक्षवाटिकामेकाकीनी प्रविश्य मदुपनीतस्य कस्य चिन्मन्त्रवादिनश्छन्नमेव हस्ते चरणमर्पयित्वा तदभिमन्त्रितेन प्रणयकुपिता नाम भूत्वा भर्त्तारमुरसि प्रहर्त्तुमर्हसि उपर्य्यसावुत्तमधातुपुष्टिमूर्ज्जितापत्योत्पादनक्षमामासादयिष्यति अनुवर्त्तिष्यते देवीमिवात्रभवन्तीं नात्र शङ्का कार्य्येति । सा तथोक्ता व्यक्तमभ्युपेष्यति । नक्तं मां वृक्षवाटिकां प्रवेश्य तामपि प्रवेशयिष्यसि । तावतैव त्वयाह मनुगृहीतो भवेयमिति । सा तथैवोपग्राहितवती ।

सोऽतिप्रीतस्तस्यामेव क्षपायां वृक्षवाटिकायां

गतो नितम्बवतीं (निर्ग्रन्थिकाप्रयत्नेनोपनीतां) पादे परामृशन्निव हेमनूपुरमेकमाक्षिप्य छुरिकयोरुमूले किञ्चिदालिख्य द्रुततरमपासरत्। सा तु सान्द्रत्रासा स्वमेव दुर्णयं गर्हमाणा जिघांसन्तीव श्रमणिकां तद्व्रणं भवनदीर्घिकायां प्रक्षाल्य दत्त्वा पटबन्धनं सा मयापदेशादपरञ्चापनीय नूपुरं शयनपरा त्रिचतुराणि दिनान्येकान्ते निन्ये। स धूर्त्तो विक्रेष्य इति तेन नूपुरेण तमनन्तकीर्त्तिमुपाससाद। स दृष्ट्वा मम गृहिण्या एवैष नूपुरः कथमयमुपलब्धस्त्वयेति तमत्रवाणं निर्बन्धेन पप्रच्छ। स तु वणिग्ग्रामस्याग्रे वक्ष्यामीति स्थितोऽभूत्। पुनरसौ गृहिण्यै स्वनूपुरयुगलं प्रेषयेति सन्दिदेश। सा च सलज्जंससाध्वसं चाद्य रात्रौ विश्रामप्रविष्टायाः वृक्षवाटिकायां प्रभ्रष्टो ममैकः प्रशिथिलबन्धो नूपुरः सोऽद्याप्यन्विष्टो न दृष्टः स पुनरयं द्वितीय इत्यपरं प्राहिणोत्। अनया च वार्त्तयामुं पुरस्कृत्य स वणिग्वणिग्जनसमाजमाजगाम। स चानुयुक्तो धूर्त्तः सविनयमावेदयत् विदितमेव खलु वो यथाहं युष्मदाज्ञया पितृवनमभिरक्ष्य तदुपजीवी प्रतिवसामि। लुब्धास्च कदाचिन्मद्दर्शनभीरवो निशि

(निर्ग्रन्थिकापचारेणेति पाठान्तरम्।)

दहेयुरपि शवानीति निशास्वपि श्मशानमधिशये अपरेद्युर्दग्धादग्धं मृतकं चितायाः प्रसभमाक्रान्तीं श्यामाकारां नारीमपश्यम्। अर्थलोभात्तु निगृह्य साध्वसं सा गृहीता शङ्खिकयोरुन्मूले यदृच्छया किञ्चिदुल्लिखितम् एष च नूपुरस्वरणादाच्छिद्य तावत्येव द्रुतगतिः सा पलायिष्ट। सोऽयमस्यागमः परं भवन्तः प्रमाणमिति। विमर्शेन च तस्याः शाकिनीत्वमैकमत्येन पौराणामभिमतमासीत्। भर्त्रा च परित्यक्ता तस्मिन्नेव श्मशाने बहु विलप्य पाशेनोद्बध्य मर्तुकामा तेन धूर्तेन नक्तमगृह्यत अनुनीता च। सुन्दरि त्वदाकारोन्मादितेन मया त्वदावर्जने बहूनुपायान् भिक्षुकीमुखेनोपन्यस्य तेष्वसिद्धेषु पुनरयमुपायो यावज्जीवमसाधारणीकृत्य रन्तुमाचरितस्तत्प्रसीदानन्यशरणायास्मै दासजनायेति मुहुर्मुहुश्चरणयोर्निपत्य प्रयुज्य सान्त्वशतानि (तामगत्यन्तरामात्मवश्यामकरोत्) तदिदमुक्तं दुष्करसाधनं प्रज्ञेति।

इदमाकर्ण्य ब्रह्मराक्षसो मामपूपुजत्। अस्मिन्नेव क्षणे नातिप्रौढपुन्नागमुकुलस्थूलानि मुक्ताफलानि सहसलिलबिन्दुभिरम्बरतलादपतन्। अ-

---

(तामत्यन्तरामात्मवश्यामकरोदित्यपि पाठः।)

हन्त किञ्चिदमित्युच्चचुरालोकयं कमपि राक्षसं काञ्चिदङ्गनां विचेष्टमानगात्रीमाकर्षन्तमपश्यम्। कथमपहरति अकामामपि स्त्रियमनाचारो नैर्ऋत इति गगनगमनमन्दशक्तिरशक्तश्चातप्ये। स तु मत्सखन्धी ब्रह्मराक्षसः तिष्ठ तिष्ठ पाप क्वापहरसीति मत्वैयनुत्थाय राक्षसेन समसृज्यत। तान्तु रोषादनपेक्षापविद्धाममरदृष्टमञ्जरीमिवान्तरिक्षादापतन्तीमुन्मुखप्रसारितोभयकरः कराभ्यामग्रहीषम्। उपगृह्य च वेपमानां सम्मीलिताक्षीं मदङ्गस्पर्शसुखेनोद्भिन्नरोमाञ्चां तादृशीमेव तामनवतारयन्नतिष्ठम्। तावत्तावुभावपि शैलशृङ्गभङ्गैः पादपैश्च रभसोन्मूलितैर्मुष्टिपादप्रहारैश्च परस्परमक्षपयेताम्। पुनरहमतिमृदुनि पुलिनवति कुसुमलवलाञ्छिते सरस्तीरेऽवरोप्य सस्पृहं निर्वर्णयंस्तां मत्प्राणैकवल्लभां राजकन्यकां कन्दुकावतीमलक्षयम्। सा हि मया समाश्वास्यमाना तिर्यग्ग्रीवामभिनिरूप्य जातप्रत्यभिज्ञा सकरुणमरोदीत्। अवादीच्च नाथ त्वद्दर्शनादुपोढरागा तस्मिन् कन्दुकोत्सवे पुनः सख्या चन्द्रसेनया त्वत्कथाभिरेव समाश्वासितास्मि त्वं किल समुद्रमध्ये मज्जितः पापेन मद्भ्रात्रा भीमधन्वनेति श्रुत्वा सखीजनं परिजनञ्च वञ्चयित्वा जीवितं जिहासुरेकाकिनी

क्रीड़ावनमुपागमं तत्र च मामचकमत कामरूप एष राक्षसाधमः सोऽयं मया भीतयावधूतप्रार्थनः स्फुरन्तीं मां निग्रहीतुमभ्यधावत् अत्रैवमवस्थितोऽभूत् । अहञ्च दैवात्तवैव जीवितेशस्य हस्ते पतिता भद्रं तवेति । श्रुत्वा च तया सहावरुह्य नावमध्यारोहम् । मुक्ता च नौः प्रतिवातप्रेरिता तामेव दामलिप्तां प्रत्युपातिष्ठत् । अवरूढाश्च वयमश्रमेण । तनयस्य च तनयायाश्च नाशादनन्यापत्यस्तुङ्गधन्वा सुह्मपतिर्निष्कलः स्वयं सकलत्र एव निष्कलङ्कगङ्गारोधसि अनशनेनोपरन्तुं प्रतिष्ठते सह तेन मर्त्तुमिच्छति अनन्यनाथोऽनुरक्तः पौरवृद्धलोक इत्यश्रुमुखीनां प्रजानामाक्रन्दमशृणुम । अथाहमसौ राज्ञे यथावृत्तमाख्याय तदपत्यद्वयं प्रत्यर्पितवान् । प्रीतेन तेन जामाता कृतोऽस्मि दामलिप्तेश्वरेण तत्सुतो मदनुजीविजातो मदाज्ञप्तेन चामुना ( प्राणवदुज्झिता ) चन्द्रसेना कोशदासमेवाभजत् । ततश्च सिंहवर्म्मसाहाय्यार्थमत्रागत्य भर्त्तुस्तव दर्शनोत्सवसुखमनुभवामीति ।

श्रुत्वा चित्रेयं दैवगतिरवसरेषु पुष्कलः पुरुषकार इत्यभिधाय भूयः स्मिताभिषिक्तदन्तच्छदो मन्त्र-

( प्रणिहितेति पाठान्तरम् । )

गुप्ते हर्षोत्फुल्लं चक्षुः पातयामास देवो राजवाहनः। स किल करकमलेन किञ्चित्संवृताननो ललितवल्लभारभसदत्तदन्तक्षतव्यसनविह्वलाधरमणिर्निरोष्ठ्यवर्णमात्मचरितमाचचक्षे।

इति दण्डिनः कृतौ दशकुमारचरिते मित्रगुप्तचरितं नाम षष्ठ उच्छ्वासः।



## मन्त्रगुप्तचरितन्नाम



### सप्तम उच्छ्वासः।

राजाधिराजनन्दन नगरभ्रमगतस्य ते गतिं ज्ञास्यन्नहमपि गतः कदाचित्कलिङ्गान्। कलिङ्गनगरस्य नात्यासन्नसंस्थितजनदाहस्थानसंसक्तस्य कस्यचित्कान्तारधरणिजस्यास्तीर्णसरसकिसलयसंस्तरे तले निषद्य निद्रालीढदृष्टिरशयिषि। गलति च कालरात्रिशिखण्डजालकान्धकारे चरितरक्षसि

चरितवीहारे निजनिलयनिलीननिःशेषजने नितान्तशीते निशीथे घनतरशाखिशाखान्तरालनिर्द्धौदिनि नेत्रनिंसिनीं निद्रां निरुन्धन् कर्णदेशं गतं "कथं खलेनानेन दग्धाङ्गेन रिरंसाकाले निदेशं दित्सता जनएव रागेणानर्गलेनार्द्दित इत्थं खलीकृतः क्रियेतास्यान कनरेन्द्रस्य केनचिदनन्तशक्तिना सिद्धान्तरायइति" किङ्करस्य किङ्कर्याश्चातिकातरं रुदितम् आकर्ण्य कएष सिद्धः का च सिद्धिः किञ्चानेन किङ्करेण करिष्यतइति दिदृक्षाक्रान्तहृदयः किङ्करगतया दिशा किञ्चिदन्तरं गतः तरलतरनरास्थिशकलरचितालङ्कारकान्तकायं दहनदग्धकाष्ठनिष्ठाङ्गाररजःकृताङ्गरागं तड़िल्लताकारजटाधरं हिरण्यरेतस्य रण्यचक्रान्धकारराक्षसे चणगृहीतनानेन्धनग्रासचञ्चदर्च्चिषि दक्षिणेतरेण करेण तिलसिद्धार्थकादीन्निरन्तरचटचटायितानाकिरन्तं कञ्चिदद्राक्षम्। तस्याग्रे स कृताञ्जलिः किङ्करः किं करणीयं दीयतां निदेशइत्यतिष्ठत्। आदिष्टश्चायं तेनातिनिकृष्टाशयेन गच्छ कलिङ्गराजस्य कर्द्दनस्य कन्यां कनकलेखां कन्यागृहादिहानयेति। सच तथाकार्षीत्। ततश्चैनां तासेनालघीयसाक्षजर्ज्जरेण च कण्ठेन रणरणिकागृहीतेन च हृदयेन हा तात

हा जननि इति क्रन्दन्तीं कीर्णम्लानशेखरस्रजि शीर्णचन्दने शिरसिजानां सञ्चये निगृह्यासिना शिलाशितेन शिरश्छिकर्त्तिषयाचेष्टत। झटिति चाच्छिद्य तस्य हस्तात्तां शस्त्रिकां तया निकृत्य तस्य तच्छिरः सजटाजालं निकटस्थस्य कस्यचित् जीर्णशालस्य स्कन्धरन्ध्रे न्यदधम्। तन्निध्याय हृष्टतरः स राक्षसः क्षीणाशिरकथयत् आर्य्य कदर्य्यस्यास्य कदर्थनाम्न कदाचिन्निद्रायाति नेते तर्ज्जयति त्रासयति चाकृत्ये चाज्ञां ददाति तदत्र कल्याणराशिना साधीयः कृतं यदेष नरकाकः कारणानां नारकीणां रसज्ञानाय नीतः शीतेतरदीधितिदेहजस्य नगरं तदत्र दयानिधेरनन्ततेजसस्तेऽयं जनः काञ्चिदाज्ञां चिकीर्षति आदिशालं कालहरणेनेत्यनंसीत्। आदिशञ्च तं सखे सैषा सज्जनाचरिता सरणिः यदणीयसि कारणेऽनणीयानादरः संदृश्यते। नचेदिदं नेच्छसि सेयं सन्तताङ्गयष्टिरल्पेशार्हा सत्यनेनाकृत्यकारिणात्ययं क्लेशिता तन्नयैनां निजनिलयं नान्यदितः किञ्चिदस्ति चित्ताराधनं न इति।

अथ तदाकर्ण्य कर्णशेखरनीलनीरजायितां धीरेतरतारकां दृशं तिर्य्यक् किञ्चिदञ्चितां सञ्चार-

यन्ती सलिलचरकेतनशरासनानतां चिल्लिकालतां ललाटरङ्गस्थलीलास्नर्त्तकीं लीलालसं लालयन्ती कण्टकितरक्तगण्डरेखा रागलज्जान्तरालचारिणी-चरणाग्रेण तिरश्चीननखार्च्चिश्चन्द्रिकेण धरणीतलं साचीकृताननसरसिजं लिखन्ती दन्तच्छदकिशलयलङ्घिना हर्षोत्सुकसलिलधाराशीकरकणजालसंक्लेदितस्य स्तननटचन्दनस्यार्द्रतां निरस्यता आस्यान्तरालनिःसृतेनातनीयसानिलेन हृदयलक्ष्यदलनदक्षरतिसहचरसायकस्य दयितेन तरङ्गितदशनचन्द्रिकाणि कानि चिदेतान्यक्षराणि कलकण्ठीकलान्यसृजत्। आर्य्य केन कारणेनैनं दासजनं कालहरणादाच्छिद्यानन्तरं रागानिलचालितरणरणिकातरङ्गिण्यनङ्गसागरे किरसि। यथा ते चरणसरसिजरजःकणिका तथाहं नितन्तनीया यद्यस्ति दया तेऽत्र जने अनन्यसाधारणः करणीयः सएष चरणाराधनक्रियायाम् यदि च कन्यागाराध्यासने रहस्यचरणादनर्थ आशङ्क्यते नैतदस्ति रक्ततरा हि नस्तत्र सख्यस्तेद्यश्च यथा न कश्चिदेतत् ज्ञास्यति तथा यतिष्यन्त इति। स चाहं देहजेनाकर्णाकृष्टसायकासनेन चेतस्यतिनिर्दयं ताड़ितस्तत्कटाक्षकालायसनिगड़गाढ़संयतः किङ्कराननिहितदृष्टिरगादिषम्

यथेयं रथचरणजघना कथयति तथाचेन्नाचरेयं नयेत नक्रकेतनः क्षणेनैकेनाकीर्त्तनीयां दशां जनञ्चैनं सह नयानया कन्यया कन्यागृहं हरिणनयनयेति। नीतश्चाहं निशाचरेण शारदजलधरजालकान्ति कन्यकानिकेतनम्। तत्र च काञ्चित्कालकलां चन्द्राननानिदेशाच्चन्द्रशालैकदेशे तद्दर्शनचलितधृतिरतिष्ठम्। सा च स्वच्छन्दतःशयानाः करतलालसंसङ्घट्टनापनीतनिद्राः काश्चिदधिगतार्थाः सखीरकार्षीत्। अथागत्य तास्चरणनिहितशिरसः चरदलकरालितेक्षणा निजशेखरकेसराग्रसंलग्नषट्चरणगणरणितसंशयितकलगिरः शनैरकथयन्। आर्य्य यदत्यादित्यतेजसस्ते एषा नयनलक्ष्यतां गता ततः कृतान्तेन न गृहीता दत्ता चेयं चित्तजेन गरीयसा साक्षीकृत्य रागानलम्। तदनेनाश्चर्य्यरत्नेन नलिनाक्षस्य ते रत्नशैलशिलातलस्थिरं रागतरलेनालङ्क्रियतां हृदयम् अस्याश्चरितार्थं स्तनतटं गाढालिङ्गनैः सदृशतरस्य सहचरस्य चेति। ततः सखीजनेनातिदक्षिणेन दृढतरीकृतस्नेह निगलस्तया सन्नताङ्ग्या सङ्गत्यारंसि।

अथ कदाचिदायासितजायारहितचेतसि लालसालिलङ्घन ग्लानघनकेसरे राजदरण्यलीललाट-

लीलायिततिलके ललितानङ्गराजाङ्गीकृतनिर्निद्रकर्णिकारकाञ्चनच्छते दक्षिणदहनसारथिरयाहृतसहकारचञ्चलकलिके कालाण्डजकण्ठरागरक्तरक्ताधरारतिरणाग्र सन्नाहश्यालिनि शालीनकन्यकान्तःकरणसंक्रान्तरागलङ्घितलज्जेदर्दुरगिरितटचन्दनाश्लेषशीतलानिलाचार्य्यदत्तनानालतानृत्यलीले काले कलिङ्गराजः सहाङ्गनाजनेन सह च तनयया सकलेन च नगरजनेन दश त्रीणि च दिनानि दिनकरकिरणजालालङ्घनीये रणदलिसङ्कुलङ्घितनतलताग्रकिसलयालीढसैकततटे तरलतरङ्गशीकरासारसङ्गशीतले सागरतीरकानने क्रीड़ारसजातासक्तिरासीत्। अथ सन्ततगीतसङ्गीतसङ्गताङ्गनासहस्रस्पृष्टाङ्गारहेलानिरर्गलानङ्ग सङ्घर्षहर्षितस्य रागप्रत्यीकतन्त्रस्य रन्ध्रे अन्ध्रनाथेन जयसिंहेन सलिलतरणसाधनानीतेनानेकसंख्येनानीकेन द्रागागत्याग्टह्यत सकलत्रः सा चानीयत त्रासतरलाक्षी दयिता नः सह सखीजनेन कनकलेखा। तदाहं दाहेनानङ्गदहनजनितेनान्तरिताहारचिन्तश्चिन्तयन् दयितां गलितगात्रकान्तिरित्यतर्कयं गता सा कलिङ्गराजतनया जनित्रा जनयितृा च सहारिहस्तं निरस्तधैर्य्यस्तां स राजा नियतं सञ्जिघृक्षेत् तदसहा च सा सती

गररसादिना सद्यः सन्तिष्ठेत। तस्माच्च तादृशीं दशां गतायां जनस्यास्यानन्यजेन इन्येत शरीरधारणा सा का स्याद्गतिरिति।

अत्रान्तरे अन्ध्रनगरादागच्छन्नग्रजः कश्चिदैक्ष्यत। तेन चेयं कथा कथिता। यथा किल जयसिंहेनानेकनिकारदत्तमङ्कर्षेण जिघांसितः स कर्दनः कनकलेखादर्शनैधितेन रागेणारक्ष्यत। सा च दारिका यक्षेण केनचिदधिष्ठिता न तिष्ठत्यग्रे नरान्तरस्य आयस्यति च नरेन्द्रसार्थसंग्रहणेन तन्निराकरिष्यन्नरेन्द्रो नचास्ति सिद्धिरिति। तेन चाहं दर्शिताशः शङ्करत्यरङ्गदेशजातस्य जरत् सालस्य स्कन्धरन्ध्रान्तर्जटाजालं निष्कृष्य तेन जटिलतां गतः कन्थाचीरसञ्चयान्तरितसकलगात्रः कांश्चिच्छिष्यानग्रहीषम्। तांश्च नानाश्चर्य्यक्रियातिसंहितान्जनादाकृष्टान्नचेलादित्यागान्नित्यहृष्टानकार्षम्। अयासिषञ्च दिनैः कैश्चिदन्ध्रनगरम्। तस्य नात्यासन्ने सलिलराशिसदृशस्य कलहंसगणदलितनलिनदलसंहतिगलितकिञ्जल्कशकलसारस्य सारसश्रेणिशेखरस्य सरसस्तीरकानने कृतनिकेतनः स्थितः शिष्यजनकथितचित्रचेष्टाकृष्टसकलनागरजनातिसन्धानदक्षः सन् दिशि दिशीत्यकीर्त्यै जनेन य एष

जरद्दरण्यस्थलीसरत्तीरे स्थण्डिलशायी यतिस्तस्य किल सकलानि सरहस्यानि सषड़ङ्गानि च छन्दांसि रसनाग्रे सन्निहितानि अन्यानि च शास्त्राणि येन यानि न ज्ञायन्ते स तेषां तत्सकाशादर्थनिर्णयं करिष्यति। असत्येन नास्यास्यं संसृज्यते। सशरीरस्त्वेष दयाराशिः एतत्संग्रहेणाद्य चिरं चरितार्था दीक्षा तच्चरणरजःकणैः कैश्चन शिरसिकीर्णैरनेकस्यानेक आतङ्कस्थिरं चिकित्सकैरसंहार्य्यः संहृतः तदङ्घ्रिक्षालनसलिलसेकैर्निष्कलङ्कशिरसां नश्यन्ति चरणैनेकेनखिलनरेन्द्रयत्नलङ्घिनस्खण्ड ग्रहाः। न तत्र शक्यं शक्रेरियत्ताज्ञानं नचास्याहङ्कारकणिकेति।

सा चेयं कथानेकजनास्यसञ्चारिणी तस्य कनकलेखाधिष्ठानघनदाज्ञाकरनिराक्रियातिसक्तचेतसः क्षत्रियस्याकर्षणायाभवत्। सचाहरहरागत्यादरेणातिगरीयसार्चयन्नसैस्य शिष्यान् संरञ्जन्नधिगतक्षणः कदाचित्काङ्क्षितार्थसाधनाय शनैरयाचिष्ट। ध्यानधीरः स्थानदर्शितज्ञानसन्निधिस्तैनं निरीक्ष्य निचाय्याकथयं तात स्थानएष हि यत्र तस्य हि कन्यारत्नस्य सकलकल्याणक्षणैकराशेरधिगतिः क्षीरसागररसनालङ्कृतायाः गङ्गादिनदीसहस्रहारयष्टिराजितायाः धराङ्गनायाएवासादनाय साधनम्।

न च स यच्चस्तदधिष्ठायी केनचिन्नरेन्द्रेण तस्या ली- लाञ्चितनीलनीरजदर्शनायाः दर्शनं सहते तदत्र स- द्यन्तां चौर्य्यहानि येरहं यतिष्येऽर्थस्यास्य साधना- येति । तथादिष्टे च हृष्टे च्चिर्तीशे गते निशि निशि- निर्न्निशाकरार्च्चिषि नीरन्ध्रान्धकारकर्णानिकरनिगी- र्णदर्शदिशि निद्रानिगड़ितनिखिलजनदृशिनिर्गत्य जलतलविलीनागाहनीयं नीरन्ध्रं कुच्छ्राच्छिद्रीकृ- तान्तरालं तदेकतः सरस्तटं तीर्थसन्निकृष्टं केन- चित् खननसाधनेनाकार्षम् । घनशिलेष्टकाच्छन्न- च्छिद्राननं तत्तीरदेशं जनैरशङ्कनीयं निश्चित्य दि- नादिस्थाननिर्णिक्तगात्रस्य नक्षत्रसन्तानहारयष्ट्यग्र- ग्रथितरत्नं चण्डान्धकारगन्धहस्तिदारणैककेसरिणं कनकशैलश्टङ्गरङ्गलास्य लीलानटं गगनसागरघन- तरङ्गराजिलङ्घनैकनकं कार्य्याकार्य्यसाक्षिणं सहस्रा- र्चिषं सहस्राचदिगङ्गनाङ्गरागरागायितकिरणजालं रक्तनीरजाञ्जलिनाराध्य निजनिकेतनं न्यशिश्रयम् ।

याते च दिनत्रये अस्तगिरिशिखरगैरिकतट- साधारणच्छाय तेजसि अचलराजकन्याकदर्थनया- न्तरिताख्येन शङ्करशरीरेण संश्लिष्टायाः सन्ध्याङ्ग- नायाः रक्तचन्दनचर्च्चितैकस्तनकलशदर्शनीये दि- नाधिनाथे जनाधिनाथः स आगत्य जनस्यास्य घर-

णिन्यस्तचरणनखकिरणच्छादितकिरीटः कृताञ्ज-
लिरतिष्ठत्। आदिष्टश्च दिष्ट्या दृष्टेष्टसिद्धिः इह
जगति हि न निरीहदेहिनं श्रियः संश्रयन्ते श्रेयां-
सि च सकलान्यनलसानां हस्ते नित्यसान्निध्यानि
यतस्ते साधीयसा सच्चरितेनानाकलितकलङ्केनार्चि-
तेनात्यादररचितेनाक्लिष्टचेतसा जनेनानेन सरस्तथा
संस्कृतं यथेह तेऽद्य सिद्धिः स्यात्। तदेतस्यां निम्नि
गलद्दर्वीयां ग्राहणीयं गाहनानन्तरञ्च सलिलतले
सततगतीनन्तःसञ्चारिणः सन्निरुद्ध्य यथाशक्ति शय्या
कार्य्या ततश्च तटस्खलितजलस्थगितजलजषण्डच-
लितदण्डकण्टकाग्रदलितदेहराजहंसत्रासजर्ज्जरर-
सितसन्दत्तकर्णस्य जनस्य च्चणादाकर्णनीयं जनिष्यते
जलसङ्घातस्य किञ्चिदारटितम्। शान्ते च तत्र सलि-
लरटिते क्लिन्नगात्रः किञ्चिदारक्तदृष्टिर्येनाकारेण
निर्यास्यसि निचाय्य तं निखिलजननेत्रानन्दकारिणं
न स यत्रः शच्यत्यग्रतः स्थितये स्थिरतरनिहित-
स्नेहशृङ्खलानिगडितश्च कन्यकाहृदयं च्चणेनैकेना-
सहनीयदर्शनान्तरायं स्यात्। अस्याश्च धराङ्ग-
नाया नात्यादृतनिराकृतारिचक्रं चक्रं करतलगतं
चिन्तनीयं न तत्र संशय। तच्चेदिच्छस्यनेकशास्त्र-
ज्ञानधीरधिषणैरधिकृतैरितरैश्च हितैषिभिराक-

लय्य जालिकशतमानाय्य अन्तरङ्गनरशतैयथेष्ट-दृष्टान्तरालं सरः क्रियेत रक्षा च तीरात् त्रिंशद्द-ण्डान्तराले सैनिकजनेन सादरं रचनीया। कस्तत्र तज्जानाति यच्छिद्रेणारयश्चिकीर्षन्तीति। तत्त्वस्य हृदयहारिजातं तदधिकृतैश्च तत्र तत्ये रन्ध्रदर्श-नासहैरिच्छाश्च राज्ञः कन्यकातिरागजनितां नितान्तनिश्चलां निश्चित्यार्थएष न निषिद्धः। तथास्थि-तस्य तदालाहनहृतरागस्य स आख्यायत। रा-जन्नत ते जनान्ते चिरं स्थितं नचैकत्र चिरस्थानं नः शस्तम् कृतकृत्यश्चेह न दृष्टासि यस्य ते राष्ट्रे ग्रासाच्छादितं तस्य ते किञ्चिदनाचर्य्यकार्य्यं गति-रार्य्यगर्ह्यैति तन्नैतच्चिरस्थानस्य कारणं तच्चाद्य सिद्धं गच्छ गृहान् यथार्हं जलेन हृद्यगन्धेन स्नातः सित-स्रगङ्गरागः शक्तिसदृशेन दानेनाराधितधरणित-लतैतिलगणाखिलस्नेहसिक्तयष्ट्यग्रग्रथितचैलाञ्चलख-ण्डकाग्निशिखासहस्रास्तनैशान्धकारराशिरागत्या-र्थसिद्धये यतेथाइति। स किल कृतघ्नतां दर्शय-न्नसिद्धिरेषा सिद्धिर्यदसन्निधिरिहार्य्याणां कष्टा चेयं निःसङ्गता या निरागसं दासजनं त्याजयति नच निषेधनीया गरीयसां गिवदृति स्नानाय गृहानया-सीत्। अहञ्च निर्गत्य निर्जने निशीथे सरसस्तीर-

रन्ध्रनिलीनः सन्नीषच्छिद्रदत्तकर्णः स्थितः स्थिते चार्द्धरात्रे कृतयथादिष्टक्रियः स्थाने स्थाने रचितरक्षः स राजा जालिकजनानानीय निराकृतान्तःशल्यं शङ्काहीनः सरःसलिलं सलीलगतिरगाहत । गतश्च कीर्णकेशं संहृतकर्णनासिकं सरसस्तलं हास्तिनस्य नक्रलीलया नीरनिलीनया तं तथाशयानं कन्धरायां न्यग्रहीषम् । खरतरकालदण्डघट्टनातिचण्डैश्च करचरणघातैर्निर्दयदत्तनिग्रहः क्षणेनैकेनाजहात्स चेष्टां ततस्वाकृष्य तच्छरीरं छिद्रे निधाय नीरान्निरयासिषम् । सद्यः कृकृतानाञ्च सैनिकानां तदत्यचित्रीयताकारान्तरग्रहणम् । गजस्कन्धगतः सितच्छत्रादिसकलराजचिह्नराजितश्चण्डतरदण्डिदण्डताडनचलजनदत्तान्तरया राजरथ्यया यातस्तां निशां नयननिरस्तनिद्रारतिरनैषम् । नीते च जनस्याचिलचतां लाक्षारसदिग्धदिग्गजशिरःसदृक्षे शक्रदिगङ्गनारत्नादर्शे अर्कचक्रे कृतकरणीयः किरणजालकरालरत्नराजिराजितराजासनाध्यासी यथासदृशाचारदर्शिनः शङ्कायन्त्रिताङ्गान् सन्निधिनिषादिनः सहायानगादिषम् । हृष्यतां शक्तिरार्षी यत्तस्य यतैरजेयस्येन्द्रियाणां संस्कारेण नीरजसा नीरजसान्निध्यशालिनि सहर्ष-

लिनि सरसि सरसिजदलसन्निकाशच्छायस्याधिकतरदर्शनीयस्याकारान्तरस्य सिद्धिरासीत् । अद्य सकलनास्तिकानां जायेत लज्जानतं शिरः तदिदानीं चन्द्रशेखरनरकशासनसरसिजासनादीनां त्रिदशेशानां स्थानान्यादररचितनृत्यगीताराधनानि क्रियन्तां ह्रियन्ताञ्च गृहादितः क्लेशनिरसनसहान्यर्थिसार्थैर्धनानीति । आश्चर्यरसातिरेकहृष्टदृष्टयस्ते जय जगदीश स्वतेजसातिशय्य दश दिशः स्थगयन्निजेन यशसादिराजयशांसि इत्यसकृदाशास्याचरन्यथादिष्टाः क्रियाः । सचाहं दयितायाः सखीं हृदयस्थानीयां शशाङ्कसेनां कन्यकां कदाचित्कार्यान्तरागतां रहस्याचचक्षे कच्चिदयं जनः कदाचिदासीद्दृष्ट इति । अथ सा हर्षकाष्ठाङ्कितेन हृदयेनेषद्दालक्ष्यदशनदीधितिलतां लीलालसं लासयन्ती ललिताञ्चितकरशाखान्तरितदन्तच्छदकिसलया हर्षजलक्लेदजर्ज्जरनिरञ्जनेक्षणा रचिताञ्जलिर्नितरां जाने यदि न स्यादैन्द्रजालिकस्य जालं किञ्चिदेतादृशं कथञ्चैतत्कथयेति स्नेहनिर्यन्त्रणं शनैरगादीत् । अहञ्चास्यै कात्स्न्र्येनाख्याय तदाननसङ्क्रान्तेन सन्देशेन सञ्जनय्य सहचर्यानिरतिशयं हृदयाह्लादम् ततश्चैतया दयितया निरर्गलीकृता-

तत्सत्कृतकलिङ्गनाथन्यायदत्तया सङ्गत्यान्ध्रकलि-
ङ्गराज्यं कलिङ्गनाथे न्यासं तस्यास्याविगलितलङ्घ-
यिषितस्याङ्गराजस्य साहाय्यकायालघीयसा साधने-
नागत्यात्र ते सखिजनसङ्गतस्य यादृच्छिकदर्शनान-
न्दराशिलङ्घितचेता जात इति । तस्य तत्कौशलं
स्मितज्योत्स्नाभिषिक्तदन्तच्छदः सह सुहृद्भिरभिन-
न्द्य चित्रमिदं महामुनेर्वृत्तमत्रैव खलु फलितमति-
कष्टं तपस्तिष्ठतु तावन्नौ हर्षप्रकर्षस्पृशोः प्रत्यास-
त्त्योर्दृष्टमिह स्वरूपमित्यभिधाय पुनरवतरतु भवा-
निति वक्त्रस्युते विस्मृते विकचराजीव सदृशं दृशं
चिक्षेप देवो राजवाहनः । सोऽप्याचचक्षे ।

इति दण्डिनः कृतौ दशकुमारचरिते मन्त्र-
गुप्तचरितन्नाम सप्तम उच्छ्वासः ।



# विश्रुतचरितन्नाम



## अष्टम उच्छ्वासः।

देव मयापि परिभ्रमता विन्ध्याटव्यां कोपि कुमारः क्षुधा तृषा च क्लिश्यन् क्लेशानर्हः क्वचित्कूपाभ्याशेऽष्टवर्षदेशीयो दृष्टः। स च त्रासगद्गदमगदत्। महाभाग क्लिष्टस्य मे क्रियतामार्य्य साहाय्यकम्। अस्य मे प्राणापहारिणीं पिपासां प्रतिकर्त्तुमुदकमुदञ्चन्निह कूपे कोपि निष्कला ममैकशरणभूतः पतितः तमलमस्मि नाहमुद्धर्त्तुमिति। अथाहमभ्येत्य व्रतत्या कयापि वृद्धमुत्तार्य्य तञ्च बालं वंशनालीमुखोद्धृताभिरद्भिः फलैश्च पञ्चषैः शरक्षेपोत्क्षितस्य लिकुचवृक्षस्य शिखरात्पाषाणपातितैः प्रत्यानीतप्राणवृत्तिमापाद्य तरुतलनिषण्णस्तं जरन्तमब्रवम्। तात कएष बालः कोवा भवान् कथञ्चेयमापदापन्नेति। सोऽश्रुगद्गदमगदत् श्रूयतां महाभाग।

विदर्भानाम जनपद स्तस्मिन् भोजवंशभूषणमंशा वतारइव धर्म्मस्यातिसत्वः सत्यवादी वदान्योविनीतोविनेता प्रजानां रञ्जितभृत्यः कीर्त्तिमानुदग्रो बुद्धिमूर्त्तिभ्यामुत्थानशील: शास्त्रप्रमाणकः शक्यभव्यकल्यारम्भी सम्भावयिता बुधान् प्रभावयिता सेवकानुद्भावयिता बन्धून् न्यग्भावयिता शत्रून् असम्बद्धप्रलापेष्वदत्तकर्णः कदाचिदप्यवितृष्णोगुणेष्वतिनदीष्णः कलासु नेदिष्ठोधर्म्मार्थसंहितासु स्वल्पेपि सुकृते सुतरां प्रत्युपकर्त्ता प्रत्यवेक्षिता कोशवाहनयोर्यत्नेन परीक्षिता सर्व्वाध्यक्षाणाम् उत्साहयिता कृतकर्म्मणाम् अनुरूपैर्दानमानैः सद्यः प्रतिकर्त्ता दैवमानुषीणामापदां षाड्गुण्योपयोगनिपुणो मनुमार्गेण प्रणेता चातुर्व्वर्ण्यस्य पुण्यश्लोकः पुण्यवर्म्मा नामासीत्। स पुण्यैः कर्म्मभिः प्राप्य पुरुषायुषं पुनरपुण्येन प्रजानामगण्यतामरेषु। तदनन्तरमनन्तवर्म्मा नाम तदायतिरवनिमध्यतिष्ठत्। स सर्व्वगुणैः समृद्धोपि दैवादण्डनीत्यां नात्यादृतोऽभूत्। तमेकदा रहसि वसुरक्षितोनाम मन्त्रिवृद्धः पितुरस्य बहुमतः प्रगल्भवागभाषत। तात सर्व्वैवात्मसम्पदभिजनात् प्रभृति अन्यूनैवात्रभवति लक्ष्यते बुद्धिश्च निसर्गपट्वी कलासु नृत्यगीतादिषु चित्रेषु च

काव्यविस्तरेषु प्राप्तविस्तारा तदेतरेभ्यः प्रतिविशिष्यते। तथाप्यसावप्रतिपद्यात्मसंस्कारमर्थशास्त्रेष्वनग्निसंशोधितेव हेमजातिर्नातिभाति बुद्धिः बुद्धिहीनोहि भूभृदत्युच्छ्रितोऽपि परैरध्यारुह्यमाणमात्मानं न चेतयते नच शक्तः साध्यं साधनं वा विभज्य वर्त्तितुम्। अयथावृत्तश्च कर्म्मसु प्रतिहन्यमानः स्वैः परैश्च परिभूयते। न चावज्ञातस्याज्ञा प्रभवति प्रजानां योगक्षेमाराधनाय। अतिक्रान्तशासनाश्च प्रजा यत्किञ्चन वादिन्यो यथाकथञ्चिद्वर्त्तिन्यः सर्व्वाः स्थितीः सङ्किरेयुः निर्म्मर्य्यादश्च लोको लोकादितोऽमुतश्च स्वामिनमात्मानञ्च भ्रंशयेत्। आगमदीपदृष्टेन खल्वध्वना सुखेन वर्त्तते लोकयात्रा। दिव्यं हि चक्षुर्भूतभवद्भविष्यत्सु व्यवहितविप्रकृष्टादिषु च विषयेषु शास्त्रं नामाप्रतिहतवृत्ति तेन हीनः सतोरप्यायतविशालयोर्लोचनयोरन्धएव जन्तुरर्थदर्शनेष्वसामर्थ्यात्। अतोविहाय बाह्यविद्यास्वभिषङ्गमागमयस्व दण्डनीतिं कुलविद्यां तदर्थानुष्ठानेन चावर्ज्जितशक्तिसिद्धिरस्खलितशासनः शाधि चिरमुदधिमेखलामुर्व्वीमिति।

एतदाकर्ण्य स्थानएव गुरुभिरनुशिष्टं तथा क्रियतइत्यन्तःपुरमविशत्। ताञ्च वार्त्तां पार्थिवेन

प्रमदासन्निधौ प्रसङ्गेनोदीरिता मुपनिशम्य समीपो-
विष्टः चित्तानुवृत्तिकुशलः प्रसादवित्तो गीतनृत्य-
वादित्रादिष्ववाच्यो वाह्यनागरीपरायणः पटुरय-
न्त्रितमुखो वक्रभङ्गिविशारदः परमर्म्मान्वेषणपरः
परिहासयिता परिवादरुचिः पैशुन्यपण्डितः सचि-
वमण्डलादप्युत्कोचहारी सकलदुर्नयोपाध्यायः काम-
तन्त्रकर्णधारः कुमारसेवको विहारभद्रोनाम स्मित-
पूर्वं व्यज्ञपयत्। देव दैवानुग्रहेण यदि कश्चिद्भा-
जनं भवति विभूतेस्तमकस्मादुच्चावचैरुपप्रलोभनैः
कदर्थयन्तः स्वार्थं साधयन्ति धूर्त्ताः। तथाहि।
केचित्प्रेत्य किल लब्धैरभ्युदयातिशयैः राशामुत्पाद्य
मुण्डयित्वा शिरोबद्ध्वा दर्भरज्जुभिरजिनेनाच्छाद्य
नवनीतेनोपलिप्यानशनञ्च शाययित्वा सर्व्वस्वं स्वीक-
रिष्यन्ति तथोपि घोरतराः पाषण्डिनः पुत्रदार-
शरीरजीवितान्यभि मोचयन्ति। यदि कश्चित्पटु
जातीयो नास्यै मृगतृष्णिकायै हस्तगतं त्यक्तुमिच्छेत्
तमन्ये परिवार्य्याहुः। एकामपि काकिणीं कार्षा-
पणलक्षमापादयेम शस्त्राहृते सर्व्वशत्रून् घातयेम
एकशरीरमात्रमपि मर्त्यं चक्रवर्त्तिनं विदधीमहि
यश्चास्मदुद्दिष्टेन मार्गेण चर्य्यतइति। स पुनरिमान्
प्रत्याह कोऽसौ मार्गइति। पुनरिमे ब्रुवते। ननु

चतस्रो राजविद्या स्त्रयी वार्त्ता आन्वीक्षिकी दण्डनीतिरिति तासु तिस्रस्त्रयीवार्त्तान्वीक्षिक्यो महत्यो मन्दफलाश्च तास्तावदासताम् अधीष्व तावद्दण्डनीतिम् इयमिदानीमाचार्य्यविष्णुगुप्तेन मौर्य्यार्थे षड्भिः श्लोकसहस्रैः संक्षिप्ता सैवेयमधीत्य सम्यगनुष्ठीयमाना यथोक्तकर्म्मक्षमेति। स तथेत्यधीते शृणोति च तत्रैव जरां गच्छति। तत्तु किल शास्त्रं शास्त्रान्तरानुबन्धि सर्व्वमेव वाङ्मयमविदित्वा न तत्त्वतोऽधिगंस्यते। भवतु कालेन बहुनाल्पेन वा तदर्थाधिगतिः। अधिगतशास्त्रेण चादावेव पुत्रदारमपि न विश्वास्यम्। आत्मकुक्षेरपि कृते तण्डुलैरियद्भिरियानोदनः सम्पद्यते इयत ओदनस्य पाकायैतावदिन्धनं पर्य्याप्तमिति मानोन्मानपूर्व्वकं देयम्। उत्थितेन च राज्ञा क्षालिताक्षालिते मुखे मुष्टिमर्द्धमुष्टिं वाभ्यन्तरीकृत्य कृत्स्नमायव्ययजातम् अह्नः प्रथमेऽष्टमे भागे श्रोतव्यम् श्रृण्वत एवास्य द्विगुणमपहरन्ति तेऽध्यक्षधूर्त्ताश्चत्वारिंशतं चाणक्योपदिष्टानाहरणोपायान् सहस्राध्यात्मबुद्ध्यैव ते विकल्पयितारः। द्वितीये अन्योन्यं विवदमानानां प्रजानामाक्रोशैर्दह्यमानकर्णः कष्टं जीवति। तत्रापि प्राड्विवाकादयः स्वेच्छया जयप-

राजयौ वित्तादधना: पापेनाकीर्त्त्या च भर्त्तारमात्मनश्च अर्थैर्योजयन्ति। तृतीये स्नातुं भोक्तुञ्च लभते भुक्तस्य यावदन्न:परिणामस्तावदस्य विषभयं न शाम्यत्येव। चतुर्थे हिरण्यप्रतिग्रहाय हस्तं प्रसारयन्नेवोत्तिष्ठति। पञ्चमे मन्त्रचिन्तया महान्तमायासमनुभवति। तत्रापि मन्त्रिणो मध्यस्था इवान्योन्यं मिथ: सम्भूय दोषगुणौ दूतचारवाक्यानि शक्याशक्यतां देशकालकार्य्यावस्थाश्च स्वेच्छया विपरिवर्त्तयन्त: स्वपरमित्रमण्डलान्युपजीवन्ति बाह्याभ्यन्तरांश्च कोपान् गूढ़मुत्पाद्य प्रकाशं प्रशमयन्त इव स्वामिनवशमवष्टम्भन्ति। षष्ठे स्वैरविहारो मन्त्रो वा सेव्य: सोऽस्यैतावान् स्वैरविहारकालो यस्य तिस्रस्त्रिपादोत्तरा नाड़िका:। सप्तमे च तुरङ्गबलप्रत्यवेक्षणप्रयास: अष्टमेऽस्य सेनापतिसखस्य विक्रमचिन्ताक्लेश: पुनरुपास्यैव सन्ध्यां प्रथमे रात्रिविभागे गूढपुरुषा द्रष्टव्या: तन्मुखेन चातिनृशंसा: शस्त्राग्निरसप्रणिधयोऽनुष्ठेया: द्वितीये भोजनानन्तरं श्रोत्रिय इव स्वाध्यायमारभते। तृतीये तूर्य्यघोषेण संविष्ट: चतुर्थपञ्चमौ शयीत किल कथमिवास्याजस्रचिन्तायासविह्वलमनसो व .ाकस्य निद्रासुखमुपनमेत्। पुन: षष्ठे शास्त्रचिन्ताकार्य्यचिन्तारम्भ:। सप्तमे तु मन्त्र-

ग्रहो दूताभिप्रेषणानि च। दूताश्च नामोभयत
प्रियाख्यानलब्धानर्थान् वीतशुल्कबाधवर्त्मनि वणि-
ज्यया वर्द्धयन्तः कार्य्यमविद्यमानमपि लेशेनोत्पा-
द्यानवरतं भ्रमन्ति। अष्टमे पुरोहितादयोऽभ्येत्यै-
नमाहुः अद्य दृष्टो दुःस्वप्नो दुःस्थिता ग्रहाः शकु-
नानि चाशुभानि शान्तयः क्रियन्तां सर्व्वमस्तु सौव-
र्णमेव होमसाधनम् एवं सति कर्म्म गुणवद्भवति ब्र-
ह्मकल्पा इमे ब्राह्मणाः कृतमेभिः स्वस्त्ययनं कल्या-
णतरं भवति। ते चामी कष्टदारिद्र्याबहुपत्या य-
ज्वानो वीर्य्यवन्तश्च अद्याप्यप्राप्तप्रतिग्रहा दत्तञ्चैभ्यः
स्वर्ग्यमायुष्यमरिष्टनाशनञ्च भवतीति बहु बहु दाप-
यित्वा तन्मुखेन स्वयमुपांशु भक्षयन्ति। तदेवमह-
र्निशमविहितसुखलेशमायासबहुलम् अविरलकद-
र्थनञ्च नयतो नयज्ञस्यास्तां चक्रवर्त्तिता स्वमण्डल-
मात्रमपि दुरारक्षं भवेत्। शास्त्रज्ञसमाज्ञातो हि
यद्ददाति यच्चानयति यत्प्रियं ब्रवीति तत्सर्व्वमति-
सन्धातुमित्यविश्वासः अविश्वास्यता हि जन्मभूमिरल-
क्ष्म्याः यावता च नयेन विना न लोकयात्रा स लोक-
त एव सिद्धः नात्र शास्त्रेणार्थः स्तनन्धयोपि हि तैस्तै-
रुपायैः स्तनपानं जनन्या लिप्सते। तदपास्यातियन्त्र-
णामनुभूयन्तां यथेष्टमिन्द्रियसुखानि येऽप्युपदिशन्ति

एवमिन्द्रियाणि जेतव्यानि एवमरिषड्वर्गस्त्याज्यः सामादिरुपायवर्गः स्वेषु परेषु चाजस्रं प्रयोज्यः सन्धिविग्रहचिन्तयैव नेयः कालः स्वल्पोपि सुखस्यावकाशो न दयइति तैरप्येभिर्मन्त्रिवकैर्युष्मत्तश्चौर्य्यार्ज्जितं धनं दासोगृहेष्वेव भुज्यते। के चैते वराकाः येऽपि मतिकर्कशाः शास्त्रकाराः शुक्राङ्गिरसविशालाक्षबाहुदन्तिपुत्र पराशर प्रभृतयस्तैः किमरिषड्वर्गो जितः कृतं वा तैः शास्त्रानुष्ठानम् तैरपि हि प्रारब्धेषु कार्य्येषु दृष्टे सिद्ध्यसिद्धी पठन्तश्चापठद्भिरतिसन्धीयमाना बहवः नन्विदमुपपन्नं देवस्य यदुत सर्व्वलोकस्य वन्द्या जातिरयातयामं वयो दर्शनीयं वपुरपरिमाणा विभूतिः। तत्सर्व्वं सर्व्वाविश्वासहेतुना सुखोपभोगप्रतिबन्धिना बहुमार्गविकल्पनात् सर्व्वकार्य्येष्वमुक्तसंशयेन तन्त्रावापेन मावृथा दृथा सन्ति ते दन्तिनां दश सहस्राणि हयानां लक्षत्रयम् अनन्तश्च पादातम् अपि च पूर्णान्येव हेमरत्नैः कोशगृहाणि सर्व्वश्चैष जीवलोकः समग्रमपि युगसहस्रं भुञ्जानो न ते कोष्ठागाराणि रेचयिष्यति। किमिदमपर्य्याप्तं यदन्यार्ज्जनायायासः क्रियते। जीवितं हि नाम जन्मवतां चतुःपञ्चाण्यहानि तत्रापि भोगयोग्यमल्पाल्पं वयःखण्डम् अपण्डिताः पुनर-

र्जयन्त एव ध्वंसन्ते नार्जितस्य वस्तुनो लवमप्यास्वादयितुमीहन्ते। किं बहुना राज्यभारं भारचमेष्वन्तरङ्गेषु भक्तिमत्सु समर्प्याप्सरःप्रतिरूपाभिरन्तःपुरिकाभीरममाणो गीतसङ्गीतपानगोष्ठीश्च यथर्त्तु बध्नन् यथार्थं कुरु शरीरलाभमिति पञ्चाङ्गीस्पृष्टभूमिरञ्जलिचुम्बितचूड़श्चिरमशेत। प्राहसीच्च प्रीतिफुल्ललोचनोऽन्तःपुरप्रमदाजनः जननायस्य सस्मितम् उत्तिष्ठ ननु हितोपदेशाद्गुरवो भवन्तः किमिति गुरुत्व विपरीतमनुष्ठितमिति तमुत्थाप्य क्रीड़ानिर्भरमतिष्ठत्।

अथैतेषु दिनेषु भूयोभूयः प्रस्तुतेऽर्थे प्रेर्य्यमाणो मन्त्रिवृद्धेन वचसाभ्युपेत्य मनसैवाचिन्तन्नृत्यवज्ञातवान्। अथैवं मन्त्रिणोमनस्यभूत्। अहो मे मोहद्वालिश्यम् अरुचितेऽर्थे चोदयन्नर्थीवाच्छिन्नतोऽहमस्य द्वास्योजातः स्पष्टमस्य चेष्टानामयथापूर्व्वम्। तथाहि न मां हस्ते स्पृशति न व्यसनेष्वनुकम्पते नोत्सवेष्वनुगृह्णाति न विलोभनवस्तु प्रेषयति न मत्सुकृतानि प्रगणयति न मे गृहवार्त्तां पृच्छति न मत्पचान् प्रत्यवेक्षते न मामासन्नकार्य्येष्वभ्यन्तरीकरोति न मामन्तःपुरं प्रवेशयति। अपि च मामनर्हेषु कर्म्मसु नियुङ्क्ते मदासनमन्यैरवष्टभ्यमानमनुजानाति मद्वै-

रिषु विस्रम्भं दर्शयति मदुक्तस्योत्तरं न ददाति म-
त्समानदोषान्विगर्हति मर्म्माणि मामुपहसति स्वम-
तमपि मया वर्ण्यमानं प्रत्यवस्थापयति महार्हाणि
वस्तूनि मत्प्रहितानि नाभिनन्दति नयज्ञानां स्खलि-
तानि मत्समक्षं मूर्खैरुद्घोषयति। सत्यमाह चाणक्यः
चित्तज्ञानानुवर्त्तिनोऽनर्था अपि प्रियाः स्युः द-
क्षिणा अपि तद्भाववहिष्कृता द्वेष्या भवेयुरिति।
तथापि का गतिरविनीतोऽपि न परित्याज्यः पितृ-
पैतामहैरस्माद्दृश्यैरयमधिपतिः। अपरित्यजन्तो-
ऽपि कमुपकारमश्रूयमाणवाचः कुर्म्मः। सर्व्वथा
नयज्ञस्य वसन्तभानोरश्मकेन्द्रस्य हस्ते राज्यमिदं
पतितम् अपि नामापदो भाविन्यः प्रकृतिस्थमेनमा-
पादयेयुः। अनर्थेषु सुलभव्यलीकेषु क्वचिदुत्पन्नो-
ऽपि द्वेषः सहृत्तमस्मै न रोचयेत्। भवतु भविता
तावदनर्थः स्तम्भितपिशुनजिह्वो। यथाकथञ्चिद-
भ्रष्टपदस्तिष्ठेयमिति।

एवं गते मन्त्रिणि राजनि च कामवृत्ते चन्द्रपा-
लितो नामाश्मकेन्द्रामात्यस्येन्द्रपालितस्य सूनुरसद्-
वृत्तः पितृनिर्वासितो नाम भूत्वा बहुभिश्चारणैर्ब-
ह्वीभिरनल्पकौशलाभिः शिल्पकारिणीभिरनेकच्छ-
न्नकिङ्करैश्च गूढपुरुषैः परिवृतोऽभ्येत्य विविधाभिः

क्रीड़ाभिर्विहारभद्रमात्मसादकरोत् । अमुना चैव
संक्रमेण राजन्यास्पदमलभत । लब्धरन्ध्रश्च स य-
द्यद्व्यसनमारभते तत्तथेत्यवर्णयत् । देव यथा मृगया
ह्यौपकारिकी न तथान्यत् अत्र हि व्यायामोत्क-
र्षादापत्स्वपकर्त्ता दीर्घाध्वलङ्घनक्षमो जङ्घाजवः क-
फापचयादारोग्यैकमूलमाशयाग्निदीप्तिः मेदोऽपक-
र्षादङ्गानां स्थैर्य्यकार्कश्यातिलाघवादीनि शीतोष्ण-
वातवर्षक्षुत्पिपासासहत्वं सत्वानामवस्थान्तरेषु चि-
त्तचेष्टितज्ञानं हरिणगवलगवयादिवधेन शस्य-
लोपप्रतिक्रिया वृकव्याघ्रादिघातेन स्थलपथशल्य-
शोधनं शैलाटवीप्रदेशानां विविधकर्म्मक्षमाणामा-
लोचनम् आटविकवर्गविस्रम्भणम् उत्साहशक्तिसन्धु-
क्षणेन प्रत्यनीकवित्रासनमिति बहुतमा गुणाः ।
द्यूतेपि द्रव्यराशेस्तृणवत्त्यागादनुपमानमाशयौदार्य्यं
जयपराजयानवस्थाभाद्धर्षविषादयोरविधेयत्वं पौरु-
षैकनिमित्तस्यामर्षस्य वृद्धिः अक्षहस्तभूम्यादिगोच-
राणामत्यन्तदुरुपलक्ष्याणां कूटकर्म्मणामुपलक्षणा-
दनन्तबुद्धिनैपुण्यम् । एकविषयोपसंहाराच्चित्त-
स्याति चित्तमैकाग्र्यम् अध्यवसायसहचरेषु साह-
सेष्वभिरतिः अतिकर्कशपुरुषप्रतिसंसर्गानन्यधर्षणी-
यतामानावधारणमकृपणञ्च शरीरयापनमिति ।

उत्तमाङ्गनोपभोगेष्वर्धधर्मायौ सफलीकरणं पुष्कलः पुरुषाभिमानः भावज्ञानकौशलमलोभक्लिष्टमाचेष्टितम् अखिलासु कलासु वैचक्षण्यम् अलब्धोपलब्धिलब्धानुरक्षणरचितोपभोगमुक्तानुसन्धानकष्टानुनयादिव्यजनमन्युगायरचनया बुद्धिवाचोः पाटवम् उत्कृष्टशरीरसंस्कारात्सुभगवेषतया लोकसम्भावनीयता परं सुहृत्प्रियत्वं गरीयसी परिजनव्यपेक्षा स्मितपूर्वाभिभाषित्वम् उद्रिक्तसत्वता दाक्षिण्यानुवर्त्तनम् अपत्योत्पादनेनोभयलोकश्रेयस्करत्वमिति। पानेऽपि नानाविधरोगभङ्गपटीयसा मासवानामासेवनात् स्पृहणीयवयोव्यवस्थापनम् अहङ्कारप्रकर्षादशेषदुःखतिरस्करणम् अङ्गजरागदीपनादङ्गनोपभोग शक्तिसन्धुक्षणम् अपराधप्रमार्ज्जनान्मनःशल्योन्मार्ज्जनम् अश्राव्यशंसिभिरनर्गलप्रलापैर्विश्वासोपबृंहणम् मत्सरानुबन्धादानन्दैकतानता शब्दादीनामिन्द्रियार्थानां सातत्येनानुभवः संविभागशीलतया सुहृद्वर्गसंवर्द्धनम् अनुपमानमङ्गलावण्यम् अनुत्तराणि विलसितानि भयार्त्तिहरणाच्च सांग्रामिकत्वमिति। वाक्पारुष्यं दण्डोदारुण्ये दूषणानि चार्थानामेव यथावकाशमौपकारकाणि। नहि

मुनिरिव नरपतिरुपशमरतिरभिभवितुमरिकुलमलम् अवलम्बितुञ्च लोकतन्त्रमिति।

असावपि गुरूपदेशमिवात्यादरेण तस्य मतमन्ववर्त्तत तच्छीलानुसारिण्यश्च प्रकृतयो विशृङ्खलमसेवन्त व्यसनानि सर्व्वेश्च समानदोषतया न कस्यचिच्छिद्रान्वेषणायायतिष्ट समानभर्तृप्रकृतयस्तत्राध्यक्षाः स्वानि कर्म्मफलान्यभक्षयन्। ततः क्रमादायद्वाराणि व्यशीर्य्यन्त व्ययमुखानि विटविधेयतया विभोरहरहर्व्यवर्द्धन्त सामन्तपौरजानपदमुख्याश्च समानशीलतयोपारूढविस्रम्भेण राज्ञा सजानयः पानगोष्ठीष्वभ्यन्तरीकृताः स्वंस्वमाचारमत्यचारिषुः। तदङ्गनासु चानेकापदेशपूर्व्वमपाचरन्नरेन्द्रस्तदन्तःपुरेषु चामी भिन्नवृत्तेषु मन्दत्रासाबद्धसुखैरवर्त्तन्त सर्व्वेश्च कुलाङ्गनाजनः सुलभभङ्गिभाषणरतो भग्नचारित्रयन्त्रण स्तृणायापि न गणयित्वा भर्तॄन् धाटगणमन्त्रणान्यशृणोत्। तन्मूलाश्च कलहाः सामर्षाणामुदभवन् अहन्यन्त दुर्व्वला बलिभिः। अपहृतानि धनवतां धनानि तस्करादिभिः अपहृतपरिभूतयः प्रहताश्च पातकपथाः हतबान्धवाः हृत वित्ता बधबन्धातुराश्च मुक्तकण्ठमाक्रोशन्नश्रुकण्ठ्रः प्रजाः दण्डश्चाथथाप्रणीतो भयक्रोधावज-

नयत्। कृशकुटुम्बेषु लोभः पदमधत्त विमानिताश्च तेजस्विनो मानेनादह्यन्त। तेषु तेषु चाक्रान्तेषु प्रासरन् परोपजापाः। तदा च मृगयुवेषमृगवाहुल्यवर्णनेनाद्रिद्रोणीरनपसारमार्गाः शुष्कतृणवंशगुल्माः प्रवेश्य द्वारतोऽग्निविसर्गैः व्याघ्रादिवधे प्रोत्साह्य तन्मुखपातनैः दुष्टकूपतृष्णोत्पादनेनातिदूरहारितानां प्राणहारिभिः क्षुत्पिपासाभिवर्द्धनै स्तृणगुल्मगूढच्छिन्नतटप्रदरपातहेतुभि र्विषममार्गप्रधावनै र्विषमुखीभिः छुरिकाभिश्चरणकण्टकोद्धरणैः विष्वग्विसरविच्छिन्नानुयातृतया एकाकीकृतानां यथेष्टघातनैः मृगदेहापराद्धै र्नामेषुमोक्षणैः सपणबन्धमधिरुह्याद्रिशृङ्गाणि दुरधिरोहाण्यनन्यलक्ष्यैः प्रभ्रंशनैः आटविकच्छद्मना विपिनेषु विरलसैनिकानां प्रतिरोधनैः अक्षद्यूतपक्षियुद्धयात्रोत्सवादिसङ्कुलेषु बलवदनुप्रवेशनैः दूतरेषां हिंसोत्पादनैः गूढोत्पादितव्यलीकेभ्योऽप्रियाणि प्रकाशं लब्ध्वा साचिषु तद्विख्याप्याकीर्त्तिगुप्तिहेतुभिः पराक्रमैः परकलत्रेषु सुहृत्त्वेनाभियोज्य जारान् भर्तॄनुभयं वा प्रहृत्य तस्माद्दोषोपन्यासयोग्यनारीहारितानां सङ्केतेषु प्रागुपनीय पश्चादभिद्रुत्याकीर्त्तनीयैः प्रमापणैः उपप्रलोभ्य विलप्रवेशेषु निधानखननेषु

मन्त्रसाधनेषु च विघ्नव्याजसाध्यैर्व्यापादनैः मत्तगजाधिरोहणाय प्रेर्य्य प्रत्यपायनिर्वर्त्तनैः व्यालहस्तिनं कोपयित्वा लक्ष्यीकृतमुख्यमण्डलेषु अपक्रमणैः दायाद्यर्थे विवदमानानुपांशु हत्वा प्रतिपक्षेष्वयशःपातनैः सामन्तपुरजनपदेष्वयथावृत्तानप्रकाशमभिप्रहृत्य तद्वैरिनामघोषणैः योग्याङ्गनाभिरहर्निशमभिरमय्य राजयक्ष्मोत्पादनैः वस्त्राभरणमाल्याङ्गरागादिषु रसविधानकौशलैः चिकित्सामुखेनामयोपबृंहणैवन्यैश्चाभ्युपायैः अश्मकेन्द्रप्रयुक्तास्तीक्ष्णरसदादयः प्रक्षपितप्रवीरमनन्तवर्म्मकटकं जर्जरमकुर्व्वन्।

अथ वसन्तभानुर्भानुवर्म्मार्णं नाम वानवास्यं प्रोत्साह्य अनन्तवर्म्मणा व्यग्राहयत्। तत्पराकृष्टराष्ट्रपर्य्यन्तश्चानन्तवर्म्मा तमभियोक्तुं बलसमुत्थानमकरोत्। सर्व्वसामन्तेभ्यश्चाश्मकेन्द्रः प्रागुपेत्यास्य प्रियतरोऽभूत्। अपरेपि सामन्ताः समगंसत गत्वा चाभ्यर्णे नर्मदारोधसि न्यविशत्। तस्मिंश्चावसरे महासामन्तस्य कुन्तलपतेरवन्तिदेवस्यात्मनाटकीयां क्षमातलोर्वशीं नाम चन्द्रपालितादिभिरतिप्रशस्तनृत्यकौशलामाकृष्यानन्तवर्मा नृत्यमद्राक्षीत्। अतिरक्तश्च भुक्तवानिमां मधुमत्ताम्। अश्मकेन्द्रस्तु

कुन्तलपतिमेकान्ते समभ्यधत्त प्रमत्तएष राजा कलत्राणि नः परामृशति कियत्यवज्ञा सोढव्या मम शतमस्ति हस्तिनां पञ्चशतानि च ते तदावां सम्भूयमुरलेशं वीरसेनमृचीकेशमेकवीरं कोङ्कणपतिं कुमारगुप्तं नासिक्यनाथस्य नागपालमुपजपाव: ते चावश्यमस्याविनयमसहमाना अस्मन्मतेनैवोपवर्त्तेरन्। अयञ्च वानवास्य: प्रियं मे मित्रममुनैनं दुर्विनीतमग्रतोव्यतिषक्तं पृष्ठत: प्राहरेम कोशवाहनञ्च विभज्य गृह्णीमइति। हृष्टेन चामुनाभ्युपेते विंशतिं वरांशुकानां पञ्चविंशतिं काञ्चनकुङ्कुमपलानां प्राभृतीकृत्याप्तमुखेन तैः सामन्तैः सम्मन्त्र्य तानपि स्वमतावस्थापयत्। उत्तरेद्युस्तेषां साकन्तानां वानवास्यस्य चानन्तवर्म्मा नयद्वेषादामिषत्वमगमत्। वसन्तभानुस्तु तत्कोशवाहनमवशीर्णमात्माधिष्ठितमेव कृत्वा यथाप्रयासं यथाबलञ्च विभज्य गृह्णीत युष्मदनुज्ञया येन केनचिदंशेनाहं तुष्यामीति शाख्यात्सर्वानुवर्त्ती तेनैवामिषेण निमित्तीकृतेनोत्पादितकलहः सर्व्वसामन्तान ध्वंसयत्। तदीयञ्च सर्व्वस्वं स्वयमेवाग्रसत्। वानवास्यं केनचिदंशेनानुगृह्य प्रत्याहृत्य सर्व्वमनन्तवर्म्मराज्यमात्मसादकरोत्।

अस्मिंश्चान्तरे मन्त्रिवृद्धो वसुरक्षितः कैश्चिन्मौलैः सम्भूय बालमेनं भास्करवर्म्माणम् अस्यैव ज्यायसीं भगिनीं त्रयोदशवर्षां मञ्जुवादिनीम् अनयोश्च मातरं महादेवीं वसुन्धरामादायापसर्पन्ना पदोऽस्या भाविन्या दाहज्वरेण देहमजहात् । अस्माद्दृष्टैर्मितैश्च नीत्वा माहिष्मतीं भर्तृद्वैमातुराय भ्रात्रे मित्रवर्म्मणे सापत्न्या देवी दर्शिताभूत् । तावद्यामनार्योऽसौ अन्यथाश्यमन्यत निर्भर्त्सितश्च तया सुतमियमखण्डचारित्रा राज्यार्हं चिकीर्षतीति नैर्घृण्यात्तमेनं बालमजिघांसीत् । इदन्तु ज्ञात्वा देव्याहमाज्ञप्तः तात नालीजङ्घ जीवतानेनार्भकेण यत्र क्वचिदवधाय जीव जीवेयञ्चेदहमपि एनमनुसरिष्यामि ज्ञापय मां क्षेमप्रवृत्तः स्ववार्त्तामिति । अहन्तु सङ्कुले राजकुले कथञ्चिदेनं निर्गमय्य विन्ध्याटवीं व्यगाहिषि । पादचारदुःस्थितश्चैनमाश्वासयितुं घोषे क्वचिद्दिनानि कानिचिद्विश्रमय्य तत्रापि राजपुरुषसम्पातभीतो दूरमपासरं तत्रास्य दारुणपिपासापीडितस्य वारि दातुकामः कूपेऽस्मिन्नपभ्रंस पतित स्त्वयैवमनुगृहीत स्त्वमेवास्यातः शरणमेधि विशरणस्य राजसूनोरित्यञ्जलिमबध्नात् ।

किमीया नात्यास्य मातेत्यनुयुक्ते मया असूनोक्तं

पाटलिपुत्रस्य वणिजो वैश्रवणस्य दुहितरि सागरदत्तायां कोशलेन्द्रात् कुसुमधन्वनोऽस्य माता जातेति। यद्येवमेतन्मातुर्मत्पितुश्चैको मातामह इति सस्नेहं तमहं सस्वजे। वृद्धेनोक्तं सिन्धुदत्तपुत्राणां कतमस्ते पितेति सुश्रुत इत्युक्ते सोऽत्यहृष्यत्। अहन्तु तं नयावलिप्तम् अश्मकं नयेनैवोन्मूल्य बालमेनं पित्र्ये पदे प्रतिष्ठापयेयमिति प्रतिज्ञाय कथमस्यैनां क्षुधं क्षपयेयमित्यचिन्तयम्। तावदापतितौ च कस्यापि व्याधस्य त्रीनिषूनतीत्य द्वौ मृगौ स च व्याधस्तस्य हस्तादवशिष्टमिषुद्वयं कोदण्डञ्चाक्षिप्यावधिषम्। एकञ्च सपत्राकृतोऽन्यश्च निष्पत्राकृतोऽपतत्। तयोरेकं मृगं दत्त्वा मृगयवेऽन्यस्यापलोमत्वचः क्लोमापोह्य निष्कुलाकृत्य विकृत्योर्व्वस्थिग्रीवादीनि शूलाकृत्य दावाङ्गारेषु तप्तेनामिषेण तयोरात्मनश्च क्षुधमत्यतार्षम्। एतस्मिन् कर्म्मणि मत्सौष्ठवेनातिहृष्टं किरातमस्मि पृष्टवान्। अपि जानासि माहिष्मतीवृत्तान्तमिति। असावाचष्ट तत्र व्याघ्रत्वचोऽहतीश्च विक्रीयाद्यैवागतः किं न जानामि प्रचण्डवर्म्मा नाम चण्डवर्म्मानुजो मित्रवर्म्मदुहितरं मञ्जुवादिनीं लिप्सुरभ्येतीति तेनोत्सवोत्तरा पुरीति।

अथ कर्णे जीर्णमन्त्रवं धूर्त्तोऽमित्रवर्म्मा दुहितरि सम्यक्प्रतिपत्त्या मातरं विश्वास्य तन्मुखेन प्रत्याक्रष्य बालकं जिघांसति तत् प्रतिगत्य कुशलमस्य मद्वार्त्ताञ्च देव्यै रहोनिवेद्य पुनः कुमारः शार्दूलभक्षितइति प्रकाशमाक्रोशः कार्य्यः स दुर्म्मतिरन्तःप्रीतो वहिर्दुःखं दर्शयन् देवीमनुनेष्यति। पुनस्त्वया त्वन्मुखेन स वाच्यः यदपेक्षया त्वन्मतमत्यक्रमिषं सोऽपि बालः पापेन मे परलोकमगात् अद्यतु त्वदादेशकारिण्येवाहमिति। स तथोक्तः प्रीतिं प्रतिपद्याभिपत्स्यति। पुनरनेन वत्सनाभनाम्ना महाविषेण सन्नीय तोयं तत्र मालां मज्जयित्वा तया स वक्ष्यसि मुखे च हन्तव्यः सएवायमसिप्रहारः पापीयसस्तव भवतु यद्यस्मि पतिव्रता पुनरनेनागदेन सङ्गमितेऽस्मसि तां मालां मज्जयित्वा स्वदुहित्रे देया मृते तु तस्मिंस्तस्याश्च निर्विकारायां सत्यां सतीत्येनैनां प्रकृतयोऽनुवर्त्तिष्यन्ते पुनः प्रचण्डवर्म्मणे सन्देश्यम् अनायकमिदं राज्यमनेनैव सह बालिकेयं स्वीकार्य्येति। तावदावां कापालिकवेषच्छन्नौ देव्यैव दीयमानभिक्षौ पुराद्वहिरुपश्मशानं वत्स्यावः पुनरार्य्यप्रायान् पौरवृद्धानाप्तांश्च मन्त्रिवृद्धानेकान्ते ब्रवीतु देवी स्वप्नेऽद्य मे देव्या विन्ध्यवासिन्या कृतः

प्रसादः अद्य चतुर्थेऽहनि प्रचण्डवर्म्मा मरिष्यति पञ्चमेऽहनि रेवातटवर्त्तिनि मन्मथवने परीक्ष्य वैजन्यं जनेषु निर्गतेषु कपाटमुद्घाट्य त्वत्सुतेन सह कोपि द्विजकुमारो निर्यास्यति। स राज्यमिदमनुपाल्य बालन्ते प्रतिष्ठापयिष्यति। स खलु बालो मया व्याघ्रीरूपया तिरस्कृत्य स्थापितः। साचेयं वत्सा मञ्जुवादिनी तस्य द्विजातिदारकस्य दारत्वेनैव कल्पितेति। तदेतदतिरहस्यं युष्मास्वेव गुप्तं तिष्ठतु यावदेतदुपपत्स्यतइति।

स साम्प्रतमतिप्रीतः प्रयातोऽर्थश्चायं यथाचिन्तितमनुष्ठितोऽभूत्। प्रतिदिशञ्च लोकवादः प्रासर्पत्। अहो माहात्म्यं पतिव्रतानामसिप्रहारएव हि स मालाप्रहारस्तस्मिन् जातोन शक्यमुपधियुक्तमेतत्कर्मेति वक्तुं यतस्तदेव दत्तं दाम दुहित्रे स्तनकुण्डनमेव तस्यै जातं न मृत्युः। योऽस्याः पतिव्रतायाः शासनमतिवर्त्तते स भस्मैव भवेदिति।

अथ महाव्रतिवेषेण माञ्च पुत्रञ्च भिक्षायै प्रविष्टौ दृष्ट्वा प्रस्तुतस्तनी प्रत्युत्थाय हर्षाकुलमब्रवीत् भगवन्नयमञ्जलिरनाथोऽयं जनोऽनुगृह्यतामस्ति ममैकः स्वप्नः स किं सत्योनवेति। मयोक्तं फलमस्याद्यैव द्रक्ष्यसीति। यद्येवं बहु भागधेयमस्यावोदास्याः

स खल्वस्याः सानाथ्यशंसी स्वप्नइति मद्दर्शनरागव-
द्वसाध्वसां मञ्जुवादिनीं प्रणमय्य भूयोपि सा हर्षग-
र्भमब्रूत तत्रेन्मिथ्या सोऽयं युष्मदीयोबालकपाली
स्त्रीमया निरोद्धव्यइति । मयापि सस्मितं मञ्जुवा-
दिनीरागदीनदृष्टिलीढ़धैर्य्येण एवमस्त्विति लब्ध-
मैत्रो नालीजङ्घमाकार्य्य निर्गत्य ततस्तच्चानुयान्तं
शनैरपृच्छम् । क्वासावत्यायुः प्रथितः प्रचण्डव-
र्मेति । सोऽब्रूत राज्यमिदं ममेत्यपास्तशङ्को राजा-
स्थानमण्डपएव तिष्ठत्युपास्यमानः कुशीलवैरिति ।
यद्येवमुद्याने तिष्ठेति तं जरन्तमादिश्य तत्प्राका-
रैकपार्श्वे क्वचिच्छून्यमठिकायां मात्राः समवतार्य्य
तद्रक्षणनियुक्तराजपुत्रः कृतकुशीलववेषलीलः प्र-
चण्डवर्म्माणमेत्यान्वरञ्जयम् अनुरञ्जितातपे तु स-
मये जन समाजोपयोगीनि संहृत्य नृत्यगीतना-
नारुदितादिहस्तचंक्रमणमूर्द्धपादपादापीड़वृश्चिक-
मकरलङ्घनादीनि मत्स्योद्वर्त्तनादीनि च करणानि
पुनरादायादायासन्नवर्त्तिनां छुरिकास्ताभिरुपहित-
वपुर्चित्रदुष्कराणि करणानि श्येनपातोत्क्रोशपा-
तादीनि दर्शयन् विंशति चापान्तरालावस्थितस्य
प्रचण्डवर्म्मणः छुरिकयैकया प्रत्युरसं प्रहृत्य जीव्या-
दर्पसहस्र वसन्तभानुरित्यभिगर्ज्जन् मज्ञातमुत्कर्तुं-

मुद्यतासिः कयापि चारभटस्य पीवरांसबाहुशिख-
रमाक्रम्य तावतैव तं विचेती कुर्व्वन्नाकुलञ्च लोक-
मुच्चक्कुर्व्वन् द्विपुरुषोच्छ्रितं प्राकारमत्यलङ्घ्यम्
अवप्लुत्य चोपवने मदनुपातिनामेष पन्था दृश्यतइति
ब्रुवाणएव नालीजङ्घसमीकृतसैकतास्पृष्टपदन्या-
सया तमालवीथ्या चानुप्राकारं प्राचा प्रतिप्रधा-
वितः पुनरवाचीञ्चितेष्टकचितत्वादलक्ष्यपातेन प्रद्रुत्य
लङ्घितप्राकारवप्रखातवलयस्तस्यां शून्यमठिकायां तू-
र्णमेव प्रविश्य प्रतिमुक्तपूर्व्ववेषः सह कुमारेण मत्क-
र्म्मतुमुलराजद्वार दुःखलब्धवर्त्मा श्मशानोद्देशमभ्य-
गाम्। प्रागेव तस्मिन् दुर्गागृहे प्रतिमाधिष्ठानएव
मया कृतं भग्नपार्श्वस्थैर्य्यस्थूलप्रस्तरस्थगितबाह्यद्वारं
विलम्। अथ गलति मध्यरात्रे वर्षधरोपनीत म-
हार्हरत्नभूषणपट्टनिवसनौ तं बिलमावां प्रविश्य तू-
ष्णीमतिष्ठाव।

देवी तु पूर्व्वेद्युरेव यथार्हमग्निसंस्कारं माल-
वाय दत्त्वा प्रचण्डवर्म्मणे चण्डवर्म्मणे च तामव-
स्थामप्सकेन्द्रोपधिकृतामेव सन्दिश्य उत्तरेद्युः प्रत्यु-
षस्येव पूर्व्वसङ्केतितपौरामात्यसामन्तवृद्धैः सहाभ्येत्य
भगवतीमर्च्चयित्वा सर्व्वजनप्रत्यक्षं परीक्षितकुक्षिवै-
जन्यं तद्भवनं विधाय दत्तदृष्टिः सह जनेन स्थित्वा

पटीयांसं पटहशब्दमकारयत्। अणुतररन्ध्रप्रविष्टेन तेन नादेनाहं दत्तसंज्ञः शिरसैवोत्क्षिप्य सप्रतिमं लोहपादपीठमंसलपुरुषप्रयत्नदुश्चलमुभयकरविधृतमेकपार्श्वमेकतो निवेश्य निरगमं निरगमयञ्च कुमारम्। अथ यथापूर्व्वमर्च्चयित्वा दुर्गाम् उद्घाटितकपाटः प्रत्यक्षीभूय प्रत्ययहृष्टदृष्टीः स्पष्टरोमाञ्चमुद्यताञ्जलि रूढविस्मयञ्च प्रणिपतन्तीः प्रकृती रभ्यधाम् इत्थं देवी विन्ध्यवासिनी मन्मुखेन युष्मानाज्ञापयति। मया स कृपया शार्दूलरूपेण तिरस्कृत्याद्य वो दत्तस्तमेनमद्य प्रभृति मत्पुत्रतया मन्दिरात्प्रपद्य इति परिगृह्णन्तु भवन्तः। अपि च दुर्घटकूटकोटिघटनापाटवप्रकटशाठ्यनिष्ठुराश्मकघटघट्टनात्मानं मां मन्यध्वमस्य रक्षितारं रक्षानिवेशश्चास्य स्वसेयं सुभ्रूरभ्यनुज्ञाता मत्त्वमार्य्ययेति।

श्रुत्वैतदहो भाग्यवान् भोजवंशो यस्य त्वमार्य्यादत्तो नाथ इत्यप्रीयन्त प्रकृतयः। सा तु वाचामगोचरं हर्षावस्थामस्पृशन्मे श्वश्रूः तदहरेव च यथावदग्राहयन्मञ्जुवादिनीपाणिपल्लवम्। प्रपन्नायाञ्च यामिन्यां सम्यगेव विलं प्रत्यपूरयम्। अलब्धरन्ध्रश्च लोको नष्टमुष्टिचिन्तादिकथनैरभ्युपायान्तरप्रयुक्तैर्दिव्यांशतामेव मम समर्थयमानो महाज्ञां नात्यव-

र्त्तेन। राजपुत्रस्यार्य्यपुत्रइति प्रभावहेतुः प्रसिद्धि-
रासीत्। तञ्च गुणवत्यह्नि भद्राकृतमुपनाय्य पुरो-
हितेन पाठयन्नीतिं राजकार्य्याण्यन्वतिष्ठम्। अचि-
न्तयञ्च राज्यं नामशक्तित्रयायत्तं शक्तयश्च मन्त्रप्रभा-
वोत्साहाः परस्परानुगृहीताः कृत्येषु क्रमन्ते म-
न्त्रेण हि विनिश्चयोऽर्थानां प्रभावेण प्रारम्भः उत्सा-
हेन निर्व्वहणम्। अतः पञ्चाङ्गमन्त्रमूलो द्विरूप
प्रभावस्कन्धश्चतुर्गुणोत्साहविटपो द्विसप्ततिप्रकृतिप-
त्रः षड्गुणकिसलयः शक्तिसिद्धिपुष्पफलश्च नयवन-
स्पति र्नेतुरुपकरोतु। स चायमनेकाधिकरणत्वा-
दसहायेन दुरुपजीवः। यस्त्वयमार्य्यकेतुर्नाम मित्र
वर्म्ममन्त्री स कोशलाभिजनत्वात् कुमारमातृपक्षो
मन्त्रिगुणैश्च युक्त स्तन्मतिमवमत्यैव ध्वस्तोमित्रवर्मा
सचेत्कल्पः पेशलमित्यथ न.लीजङ्घ' रहस्यभिद्यम्।
तात आर्य्यमार्य्यकेतुमेकान्ते ब्रूहि कोन्वेष मायापु-
रुषो यदिमां राज्यलक्ष्मीमनुभवति स्वचायमस्माद्बालो
भुजङ्गेनामुना परिगृहीतः किमुद्गीर्य्येत ग्रस्येत वेति।
स यद्वदिष्यति तद्रूहि बोध्य इति। सोऽन्यदेवं मा-
मावेदयत्। सुहृद्रूपास्य प्राभृतैः प्रवर्त्त्य चित्राः
कथाः संवाह्य पाणिपादमतिविश्रम्भदत्तचर्णं तम-
प्राक्षं त्वदुपदिष्टेन नयेन। सोऽप्येवमकथयत् भद्र

मैवं वादीरभिजनस्य शुद्धिदर्शनमसाधारणं बु-
द्धिनैपुणमतिमानुषं प्राणबलमपरिमाणमौदार्य्यमत्या-
श्चर्य्यमस्त्रकौशलमल्यं शिल्पज्ञानमनुग्रहार्द्रं चेत
स्तेजश्चाप्यपरविषह्यमभ्यमित्रीणमित्यस्मिन्नत्र सन्नि-
पातिता गुणा येऽन्यत्रैकैकशोऽपि दुर्लभाः द्विषतामेष
चिरविल्वद्रुमः प्रज्ञानान्तु चन्दनतरुरसमुद्धृत्य नीति-
ज्ञम्मन्यमश्मकमिमञ्च राजपुत्रं पित्र्ये पदे प्रतिष्ठि-
तमेव विद्धि नात्र संशयः कार्य्यइति। तच्चापि श्रुत्वा
भूयो भूयश्चोपधाभिर्विशोध्य तं मे मतिसहायमकर-
वम् तत्सखश्च सत्यशौचयुक्तानमात्यान्विविधव्यञ्ज-
नांश्च गूढ़पुरुषानुपदपादयम्। तेभ्यश्चोपलभ्य लुब्ध-
समृद्धमत्युत्सिक्तमविधेयप्रायञ्च प्रकृतिमण्डलमलुब्ध-
तामभिविख्यापयन् धार्म्मिकत्वमुद्भावयन्‌। नास्तिकान्
कदर्थयन् कण्टकान् विशोधयन् अमित्रोपधीरपघ्नन्
चातुर्व्वर्ण्यञ्च स्वधर्म्मकर्म्मसु स्थापयन् अभिसमाहरेय-
मर्थान् अर्थमूला हि दण्डविशिष्टकर्म्मारम्भाः नचा-
न्यदस्ति पापिष्ठं तत्र दौर्बल्यादित्याकलय्य योगान-
न्वतिष्ठम्।

इति दण्डिनः कृतौ दशकुमारचरिते वि-
श्रुतचरितं नाम अष्टम उच्छ्वासः।



## विज्ञापनम् ।



कलिकाताराजधान्यां श्रीयुतबाबुभुवनचन्द्र
वसाकसंस्थापित संवादज्ञानरत्नाकराख्य
यन्त्रे देवनागराक्षरे मुद्रित
पुस्तकविवरणम् ।

( निमतलाघाटष्ट्रीट ८ संख्यक भवन । )

संस्कृतम् ।

सटीकम् । शिशुपालबध । रघुवंश । किरातार्ज्जुनीय । वेणीसंहारनाटक । कुमारसम्भवसप्तमसर्गान्त । ऋतुसंहारः ।

मूलमात्रम् । सुश्रुतः । साहित्यदर्पण । कुमार, उत्तरखण्ड । किरातार्ज्जुनीय । दशकुमारचरित । वसन्ततिलकभाणः ।

हिन्दी ।

श्रीमद्भगवद्गीता । प्रेमसागर । वैताल पच्चीसी । माधवविलास । ऐन्द्रजालिक विद्या के पहिला खण्ड । बारहमासी ।